

# जायकेदार, मजेदार
# कोकानाका कुकीज़



## *असली नारियल से बना*

- कृत्रिम स्वादों से नहि






**न्यूट्रीन
कोकानाका
कुकीज़**



# प्रगतिशील-भारतीय-महिलायाः कृते



# गृहलक्ष्मी

युनिट् प्लान्

**अष्टादशाधिकवर्षीयाणां तादृशीनां महिलानां कृते आरचिता योजना, या च भवतां पुत्री, भगिनी, भगिनीपुत्री, पौत्री, आत्मीयकोटिं प्रविष्टा अन्या वा स्यात्, अथवा स्वयं भवती अपि स्यात् ...... ।**

## वैशिष्ट्यानि

- अत्र न्यूनातिन्यूनं रू. ५०००/- विनियोक्तव्यानि । ततः सहस्त्रगुणकपरिमाणेन धनं विनियोक्तुं शक्यते । नास्ति गरिष्ठमितिः धनविनियोगस्य ।
- या काऽपि व्यक्तिः, अविभक्तहिन्दुपरिवारः(H.U.F.) वा अष्टादशवर्षीयायाः ततोऽप्यधिकवयस्कायाः वा महिलायाः नाम्नि धनविनियोगं कर्तुम् अर्हति । अष्टादशाधिकवयस्का भारतीयमहिला या काऽपि स्वनिमित्तम् एव धनं विनियोक्तुम् अपि अर्हति ।
- प्रथमवर्षे लाभांशवितरणं न भवति । द्वितीयवर्षतः प्रातिवार्षिकं लाभांशवितरणं भविष्यति । यथा - अक्टोबर् - १९९५ मासे स्वीकृतस्य आवेदनपत्रस्य कृते जुलै - १९९७ तः लाभांशः वितीर्यते ।
- वर्षत्रयानन्तरं यदा कदापि एन्.ए.वि. मूल्यानुगुणं धनं प्रतिस्वीकर्तुं शक्यते ।
- मूलधनवृद्ध्यर्थम् अस्ति अवकाशः ।
- एतस्याः योजनातः प्राप्तः रू. १३,०००-०० परिमितः आयः अधिनियमसङ्ख्या -८०एल् अनुगुणम् आयकरमुक्तिम् अर्हति ।
- ३०,०००-०० रूप्यकपरिमितम् उपायनं करमुक्तिम् अर्हति । अन्यावलम्बिमहिलायै विवाहसमये दत्तं लक्षरूप्यकपरिमितं धनम् अपि करमुक्तिम् अर्हति ।
- १९९५ तमवर्षस्य आर्थिकनियमानुगुणं लाभांशरूपात् आयात् एव करधनं न्यूनीक्रियते ।




**UNIT TRUST OF INDIA**

भवतां शुभोदर्काय

All investments in mutual funds and securities are subject to market risks and the NAV of schemes may go up or down depending upon the factors and forces affecting securities market. Past performance is not necessarily indicative of future results. Grihalakshmi is only the name of the plan and does not in any manner indicate either the quality of the scheme, its future prospects or returns. There can be no assurance that the Plan's objectives will be achieved. Please read the offer document before investing.

**Zonal Office:** 29, Rajaji Salai, Madras 600 001. Ph: 517101. **Branch Offices:** • **Bangalore.** Ph: 2263739 • **Cochin.** Ph: 362354 • **Coimbatore.** Ph: 214973 • **Hubli.** Ph: 363963 • **Hyderabad.** Ph: 511095 • **Madras.** Ph: 517101, 517190 • **Madurai.** Ph: 38186 • **Mangalore.** Ph: 426258 • **Thiruvananthapuram.** Ph: 33145 • **Trichur.** Ph: 331259 • **Trichy.** Ph: 27060 • **Vijayawada.** Ph: 74434 • **Visakhapatnam.** Ph: 548121

संस्कृत मञ्जरी

एक साहित्यिक त्रैमासिक पत्रिका

संस्कृत मञ्जरी

समकालीन साहित्य के रचनात्मक मूल्यांकन की जीवन्त प्रस्तुति

## संस्कृत मञ्जरी

देश-भर के जाने माने सृजनधर्मी शब्द-साधकों के साथ-साथ उदीयमान प्रतिभाओं की सशक्त लेखनी का संयुक्त मंच

# संस्कृत मञ्जरी

संस्कृत भाषा ओर साहित्य के उन्नयन-हेतु सतत प्रयत्नशील **दिल्ली संस्कृत अकादमी, दिल्ली द्वारा प्रकाशित** एक ऐसी संपूर्ण साहित्यिक पत्रिका जो सहज मानवीय संवेदनाओं, शोध निबन्धों तथा उदात्त जीवन-मूल्यों का अनूठा संगम और हर वर्ग के पाठक-समुदाय की अपेक्षा के अनुकूल पठनीय एवं संग्रहणीय है।

मूल्य : एक प्रति ८/- रु. मात्र (वार्षिक ३२/- रु. मात्र)

सुरुचि-संम्पन्न स्वस्थ सकारात्मक अभिव्यक्ति की सूत्रधार **"संस्कृत मञ्जरी"** के स्थायी सहभागी बनें।

आज ही अपना वार्षिक शुल्क मनीआर्डर अथवा दिल्ली में भुनाये जाने योग्य बैंक ड्राफ्ट द्वारा भिजवाकर

सदस्यता प्राप्त करें। **शुल्क चैक द्वारा स्वीकार्य न होगा।**

अधिक जानकारी के लिए संपर्क करें -



**श्रीकृष्ण सेमवाल, सचिव**

**दिल्ली संस्कृत अकादमी**

राजकीय सह शिक्षा माध्यमिक विद्यालय परिसर

वजीरपुर गाँव जे. ब्लाक, फेज़ - I, अशोक विहार,

दिल्ली - ११० ०५२ दूरभाष : ७२५३४०३, ७२५३४०४





# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## अग्रिमं शतकम् अधिकृत्य...

इदानीं नूतनवर्षस्य विषये चिन्तनात् अपि, नूतनशतकस्य विषये चिन्तनम् एव अधिकम् औचित्यम् आवहेत् । इतः चतुर्णां वर्षाणाम् अनन्तरम् एषः प्रपञ्चः २० तमशतकम् आपृच्छ्य २१ तमशतकस्य स्वागतं करिष्यति । स च कालः इतोऽपि आसन्नः न चेदपि जनाः २१ तमशतकस्य स्वागतार्थम् इदानीमेव सज्जताम् आरब्धवन्तः सन्ति । तेषां निरीक्षा अस्ति यत् १९९९ तमवर्षस्य अन्तिमदिनस्य अनन्तरदिनानि समृद्धानि शान्तियुतानि च भवेयुः इति ।



इदानीं स्थितेन २० तमशतकेन एतावता जागतिकयुद्धद्वयं दृष्टम् अस्ति । युद्धद्वयम् अपि 'जागतिकम्' इति निर्दिश्यते । यतः प्रपञ्चस्य सर्वे अपि देशाः युद्धद्वये अपि प्रत्यक्षरूपेण परोक्षरूपेण वा भागम् अवहन् । सर्वे अपि देशाः एतेन युद्धद्वयेन प्रभाविताः अभवन् च । प्रथमजागतिकयुद्धसमये अस्माकं देशः ब्रिटिष्शासनाधीनः आसीत् । अतः तदा ब्रिटन्देशेन युद्धे यत्र यत्र भागः ऊढः आसीत्, तत्र सर्वत्र भारतीयसैनिकाः अपि भागम् अवहन् । युद्धे प्राणहानिः अपरिहार्या । द्वितीयजागतिकयुद्धे अपि अस्मदीयाः बहवः सैनिकाः ब्रिटन्देशार्थं स्वप्राणान् अर्पितवन्तः ।

तत्काले एव अत्र भारते अनेके सैनिकेतरजनाः ब्रिटिष्शासनं विरुद्ध्य आन्दोलनं कृतवन्तः । एतस्य शतकस्य आरम्भे स्वातन्त्र्यप्राप्त्यर्थं ते उत्सुकाः आसन् । ब्रिटिष्शासनं समूलम् उत्पाटयितुम् इच्छन्ति स्म अस्मद्देशीयाः । स्वातन्त्र्यान्दोलनसन्दर्भे किं किं प्रवृत्तम् इति शतकेऽस्मिन् जाताः, द्वितीय-तृतीय-चतुर्थदशकीयाः सर्वे अपि भारतीयाः जानन्ति एव ।



अर्धशतकात् पूर्वं वयं स्वातन्त्र्यं प्राप्तवन्तः । ५० वर्षेभ्यः वयं प्रजाप्रभुत्व-पोषकं जीवनम् आचरन्तः स्मः । एतच्च प्रजाप्रभुत्वम् अस्माभिः एव चितम् । अस्माभिः एव एतस्य स्वरूपं निर्णीतम् अस्ति अपि । एवं स्थिते अपि अस्माकं देशस्य तृतीयांशजनाः दारिद्र्यरेखाम् अतिक्रान्तुम् अशक्ताः दृश्यन्ते । ५०% जनानाम् अक्षरज्ञानं नास्ति ।

भाविशतकम् एतयोः समस्ययोः परिमाणे किं किञ्चित् वा न्यूनतां सम्पादयेत् ? नववर्षारम्भसन्दर्भे अस्मिन् अस्माकम् अपेक्षा तु अस्ति यत् आगामिषु वर्षेषु एतयोः समस्ययोः निर्मूलनं भवेत् इति ।


सम्पुटः - १२ जनवरी - १९९६ सञ्चिका - १०

प्रतिकृतिमूल्यं रू. ५.०० * वार्षिकं ग्राहकशुल्कं रू. ६०.००




# अयि, मातरः!

# 'पोलियो' नियन्त्रणं भवतीभिः एव कर्तुं शक्यम् ।




## डिसेम्बर्मासस्य ९ दिनाङ्कः, जनवरीमासस्य २०तमः दिनाङ्कः च राष्ट्रियपोलियो-निरोधक-दिनत्वेन घोषितः अस्ति ।

भवद्भिः इतः पूर्वमेव बालेभ्यः रोगनिरोधकम् औषधं दत्तं स्यात् । तथापि सुरक्षादृष्ट्या द्वितीयवारं पुनः डिसेम्बर् ९ दिनाङ्के, जनवरी २० दिनाङ्के वा समीपस्थं पोलियोनिरोधकशिबिरं प्रति स्वस्य अपत्यं नीत्वा औषधं दापयन्तु, यदि च भवदपत्यम् ऊनत्रिवर्षीयं स्यात् ।

**स्वस्थबालानां भविष्यमेव अस्माकं देशस्य भविष्यम् ।**

क्रि.श. २००० तमवर्षतः पूर्वं भारतं पोलियोनिर्मुक्तं देशं कर्तुं सहर्षं साहाय्यं करवाम वयम् ।



**PolioPlus**

# पोलियोप्लस्

## डिसेम्बर् - ९, १९९५
## जनवरी - २०, १९९६

एतौ दिनाङ्कौ सम्यक् स्मरन्तु । यतः एतौ दिनाङ्कौ भवतां बालानां संरक्षणस्य दिवसौ स्तः ।



वार्ताविशेषः -

# हाङ्काङ्ग्वार्ता

एषु दिनेषु हाङ्काङ्ग्विषये बह्व्यः वार्ताः पत्रिकासु दृश्यन्ते । प्रपञ्चस्य भूपटे चीनादेशस्य आग्नेयदिशि लघुबिन्दुवत् दृश्यते हाङ्काङ्ग् । १०० कि. मी. विस्तीर्णप्रदेशे विद्यमानानां २३५ द्वीपानां समूहः हाङ्काङ्ग्प्रदेशः । अत्र प्रायः ५९,००,००० जनाः वसन्ति ।

'क्रौन् कालनी' इति प्रसिद्धः हाङ्काङ्ग्प्रदेशः १५५ वर्षाणि यावत् ब्रिटिष्शासनाधीनः आसीत् । गते सप्टम्बर्मासे तत्र शासनसभायाः निमित्तं निर्वाचनम् अभवत् । यतः १९९७ तमे वर्षे हाङ्काङ्ग्प्रदेशेन स्वातन्त्र्यं प्राप्स्यते । अनन्तरं चीनादेशेन सह विलीनः भविष्यति एषः देशः ।

१६ शतके प्रथमं पोर्चगीस्जनाः अत्र आगतवन्तः । १८ शतकस्य आरम्भे ब्रिटिष्जनाः आगतवन्तः । तदा भारते ईस्ट् इण्डिया संस्थायाः आधिपत्यम् आसीत् । एतया संस्थया चीनादेशेन सह वाणिज्यव्यवहारः क्रियते स्म । अन्यैः वस्तुभिः सह मादकवस्तूनां विनिमयार्थं ब्रिटिष्सर्वकारेण अनुरोधः कृतः । अतः एतयोः देशयोः सम्बन्धः विच्छिन्नः अभवत् । एतेन एव निमित्तेन तयोः देशयोः मध्ये युद्धानि अपि प्रवृत्तानि । मादकवस्तूनां (पदार्थानाम्) निमित्तं सङ्घर्षः अपि आरब्धः । अन्ते १८४१ तमे वर्षे चीनादेशेन हाङ्काङ्ग्प्रदेशः ब्रिटन्देशाय दत्तः । १८९८ तमवर्षे हाङ्काङ्ग्प्रदेशं ९९ वर्षाणां निमित्तं ब्रिटिष्सर्वकारस्य अधीनम् अकरोत् चीनादेशः ।

१९८४ तमे वर्षे द्वयोः देशयोः मध्ये जातस्य सन्धेः अनुगुणं १९९७ जुलैमासस्य प्रथमे दिनाङ्के चीनादेशः हाङ्काङ्गप्रदेशस्य अधिकारं पुनः प्राप्स्यति । गत-पञ्चाशद्वर्षेभ्यः वैज्ञानिकक्षेत्रे तन्त्रज्ञाने च महती प्रगतिः साधिता अस्ति हाङ्काङ्गदेशेन । नौकानिर्माणक्षेत्रे, रासायनिक-पदार्थानां निर्माणे, इलेक्ट्रानिक्-उपकरणानां निर्माणे चापि बहु साधितम् अस्ति । दक्षिणकोरिया, सिङ्गपूर्, तैवान् (तैवान्देशः अपि कदाचित् चीनादेशस्य अन्तर्गतः आसीत् ।) इत्येते त्रयः देशाः हाङ्काङ्ग् च 'एशियाभूखण्डस्य व्याघ्राः' इति श्लाघ्यन्ते स्म ।

गतसप्टम्बर्मासे प्रवृत्ते निर्वाचने चीनाविरोधिना डेमोक्राटिक्पक्षेण ६० स्थानानि प्राप्तानि । चीनापरस्य डेमोक्राटिक्-अलयन्स्पक्षस्य पराभवः अभवत् ।

डेमोक्राटिक्पक्षस्य विजयकारणात् चीनादेशेन जागरूकता आश्रयणीया भवेत् । यतः १९८४ तमे वर्षे चीना-ब्रिटिष्देशयोः यः सन्धिः अभवत् तदनुगुणं निर्णीतं यत् वाणिज्यं, पौरत्वाधिकारः, स्वातन्त्र्यम् इत्येतादृशेषु विषयेषु चीनादेशेन ५० वर्षाणि यावत् विघ्नः न आचरणीयः इति, हस्तक्षेपः अपि न करणीयः इति च । एतस्य फलं सिद्धं यत् एकस्मिन् एव देशे संविधानद्वयस्य स्थितिः भवति इति ।

ब्रिटिष्जनाः चीनादेशस्य विरोधरूपेण हाङ्काङ्ग्प्रदेशे कुतन्त्रम् आचरन्तः सन्ति इति चीनादेशस्य आक्षेपः अस्ति । "एवमेव यदि अनुवर्तेत तर्हि अधिकारस्य विनिमयानन्तरं निर्वाचनस्य फलितांशप्रकटनं न घोषयिष्यामः" इति वदति चीनादेशः ।

एतादृशपरिस्थितौ हाङ्काङ्ग चीनादेशेन सह स्थास्यति उत स्वतन्त्रदेशरूपेण परिवर्तितः भविष्यति इति ज्ञातुं वर्षद्वयस्य प्रतीक्षा करणीया ।





# मान्त्रिकदुर्गम्

देवगिरेः राजकुमारी रूपवती । नामोचितं रूपं तस्याः । किन्तु सा अष्टादशवर्षीया चेदपि तस्याः बालभावः तु न अपगतः आसीत् । बालभावस्य पूरकतया कोपः, साहसशीलता च तस्यां वर्धते स्म । सर्वदा सा 'पर्वताग्रे विद्यमानं लक्ष्मीमन्दिरं गच्छामि' इति उक्त्वा आत्मीयया सख्या शशिकलया सह गहनारण्ये वृक्षच्छायायां, वहन्तीनां नदीनां समीपे च भ्रमणं करोति स्म ।

रूपवती शशिकला च यत्र भ्रमणं कुरुतः स्म, तत्रत्यस्य पर्वतस्य अग्रभागे एकं प्राचीनं दुर्गम् आसीत् । तत् दुर्गं शशिकलायै प्रदर्शयन्ती रूपवती कदाचित् उक्तवती - "कदाचित् पर्वतम् आरुह्य समग्रं दुर्गं दृष्ट्वा आगन्तव्यम्" इति ।

रूपवत्याः वचनं श्रुत्वा शशिकला भयेन - "राजकुमारि, तादृशं चिन्तनं परित्यजतु भवती । प्राचीनानि दुर्गाणि सर्वदा राक्षसैः मान्त्रिकैः वा वशीकृतानि भवन्ति" इति उक्तवती ।

"भवत्याः सर्वेषु विषयेषु भयम् एव । भवती पश्यन्ती भवतु । कदाचित् अहम् एकाकिनी गत्वा 'दुर्गे किम् अस्ति' इति दृष्ट्वा आगमिष्यामि" इति उक्तवती रूपवती ।

शीघ्रं पुत्र्याः विवाहं निर्वर्तयावः चेत् पुत्र्यां परिवर्तनं भवेत् इति चिन्तितवन्तौ राजा राज्ञी च । अतः 'अमरावत्याः राजकुमारेण सह पुत्र्याः विवाहः भवतु' इति तौ निर्णीतवन्तौ । किन्तु रूपवती विवाहं न इच्छति स्म । सा स्वमनोगतं मातापितरौ निवेद्य - "एतस्मिन् राजकुमारे वैशिष्ट्यं किम् अस्ति, येन अहम् एतं परिणयेयम्?" इति धाष्ट्र्येन पृष्टवती ।

रूपवत्याः प्रश्नं श्रुत्वा आश्चर्यचकितः

"भामहः"

राजा - ''अमरावत्याः राजकुमारः नयसेनः गुरुकुले विद्याभ्यासं समापितवान् अस्ति । विद्याविनयसम्पन्नः सः अग्रे अमरावत्याः राजा भविष्यति'' इति उक्तवान् ।

मातापित्रोः उत्तरं श्रुत्वा असमाधानं प्रकटयन्ती रूपवती - ''सुन्दरः, विद्यावान्, सिंहासनाधीशः भविष्यति, इत्येतादृश-विषयेषु वैशिष्ट्यं किम् अस्ति ? एतत् सर्वं राजकुमाराणां सामान्यलक्षणम् एव । मम प्रश्नः - एतस्य राजकुमारस्य अनितर-साधारणं वैशिष्ट्यं किम् अस्ति इति । अहं तु तादृशम् एव परिणेष्यामि, यश्च जलस्य उपरि स्थले इव सञ्चारं कर्तुं शक्नुयात्, यश्च पक्षी इव वायौ उड्डयनं कर्तुं वा शक्नुयात्, यश्च मम असम्बद्धानां प्रश्नानां समुचितं उत्तरं वा दद्यात् । वैशिष्ट्यरहितं सामान्यगुणयुक्तम् अहं कदापि न परिणेष्यामि'' इति उक्तवती ।

एतत् श्रुत्वा चकिता राज्ञी - ''भवत्यां दुष्टशक्तेः आवाहनं तु न जातं खलु ! अलम् अविवेकेन । सर्वदृष्ट्या अपि एषः उत्तमः सम्बन्धः । अतः नयसेनेन सह एव भवत्याः विवाहः'' इति उक्तवती ।

ततः विवाहः निश्चितः । नयसेनः सपरिवारं बन्धुभिः सह राजभवनस्य पार्श्वे स्थिते अतिथिगृहे उषितवान् । विवाहार्थं दिनद्वयम् अवशिष्टम् आसीत् । अत्रान्तरे अकस्मात् रूपवती अन्तःपुरतः अदृश्यतां गता । प्रवृत्तं सर्वं दृष्ट्वा खिन्नौ राजा राज्ञी च पुत्र्याः अन्वेषणार्थं चतसृषु दिक्षु



सैनिकान् प्रेषितवन्तौ ।

रूपवत्याः सखी शशिकला तु 'राजकुमारी साहसबुद्ध्या एव अदृश्यतां गता स्यात् । सा दुर्गं द्रष्टुम् इच्छति स्म । तत्रैव दुर्गे सा निलीय स्थितवती स्यात् । विवाहमुहूर्तसमये राजकुमार्याः आनयनं मम कर्तव्यम्' इति चिन्तयन्ती पर्वतारोहणं कृत्वा दुर्गस्य समीपं गतवती । तावता अन्धकारः प्रसृतः आसीत् । दुर्गस्य द्वारं पिहितम् आसीत् । द्वारे विद्यमाने रन्ध्रे दृष्टिं प्रसार्य चकिता सा भयेन कम्पिता अभवत् । दुर्गं शिथिलावस्थायाम् आसीत् । द्वारसमीपे एव किञ्चन महा-सरोवरम् आसीत् । सरोवरस्य तीरे कश्चित् कुरूपी उपविष्टवान् आसीत् । तस्य पृष्टं



धनुः इव वक्रम् आसीत् । श्मश्रुलस्य तस्य शरीरं कृष्णं, नेत्रे विशालतया उद्घाटिते च आस्ताम् । तस्य पार्श्वे एव अश्रुपूर्णनेत्रा रूपंवती उपविष्टवती आसीत् ।

सः कुरूपी बडिशं चालयन् रूपवतीम् उद्दिश्य - "भवत्या अहं परिणेतव्यः । अन्यथा अहं भवतीं मत्स्यरूपेण परिवर्त्य सरोवरे त्यजामि । अनन्तरं कदाचित् सः मत्स्यः एव मम आहारः भविष्यति । जागरूका भवतु भवती" इति उक्तवान् ।

तस्य वचनं श्रुत्वा रूपवती - "अमरावत्याः राजकुमाराय निश्चिता वधूः आसम् अहम् । पतितदन्तेन पलितकेशेन मान्त्रिकेण भवता सह मम विवाहः सर्वथा न शक्यते" इति उक्तवती ।

मान्त्रिकः कोपेन रूपवतीं पश्यन् - "कियत् धाष्टर्यं भवत्याः ? एवं तर्हि सरोवरे एव भवत्याः स्थितिः उचिता । तथापि दिनद्वयस्य समयावसरं यच्छन् अस्मि । तावत्पर्यन्तम् अस्मिन् घटे वसतु" इति वदन् बडिशदण्डेन रूपवत्याः शिरः स्पृष्टवान् ।

तत्क्षणे रूपवती मत्स्यरूपं प्राप्तवती । मान्त्रिकः अट्टहासं कुर्वन् मत्स्यरूपिणीं रूपवतीं घटे स्थापयित्वा शरावेण घटं पिहितवान् । अन्धकारः प्रसृतः आसीत् इति कारणतः पञ्जिकामेकां ज्वालितवान् सः । एतत् दृष्ट्वा कोपेन शशिकला द्वारशब्दं कृतवती । मान्त्रिकः कोपेन - "रात्रौ अत्र आगमनस्य साहसं कः कृतवान् स्यात् ? कियत् धाष्टर्यं तस्य ?" इति वदन् द्वारम् उद्घाटितवान् ।

शशिकला भयं प्रदर्शयन्ती मान्त्रिकम् उद्दिश्य - "आर्य, दूरप्रयाणं कुर्वत्या मया अन्धकारः प्रसृतः इति कारणतः अत्र आगतम् । अद्य रात्रौ अत्र स्थातुम् अनुमतिं ददातु कृपया" इति उक्तवती ।

मान्त्रिकस्य विकाराकारकं मुखं दृष्ट्वा सर्वे जुगुप्सां प्रदर्शयन्ति स्म । किन्तु शशिकला आदरेण सम्भाषणं कृतवती आसीत् । एतत् दृष्ट्वा सन्तुष्टः मान्त्रिकः - "सुन्दरी युवती रात्रौ किं, दिने अपि अत्र आश्रयं प्राप्तुम् अर्हति । अन्तः आगच्छतु भवती" इति उक्तवान् ।

शशिकलायाः आगमनस्य अनुक्षणं

मान्त्रिकः दुर्गद्वारं पिधाय - "भवत्याः सौन्दर्यं द्रष्टुम् एका पञ्जिका न पर्याप्ता । अपरामेकां प्रज्वाल्य आनयामि" इति उक्त्वा दूरे विद्यमानं प्रकोष्ठं प्रति गतवान् ।

'मया एतस्य अवसरस्य लाभः स्वीकरणीयः' इति निश्चित्य अनुक्षणं घटस्य शरावम् अपसारितवती शशिकला । शशिकलाम् अभिज्ञाय रूपवती लुण्ठनम् आरब्धवती । तदा शशिकला राजकुमारीम् उद्दिश्य - "सखि, भवत्याः रक्षणार्थम् आगता अस्मि । भयं मास्तु" इति उक्तवती ।

मान्त्रिकस्य आगमनं दृष्ट्वा शशिकला शरावेण घटं पिधाय, तस्य आगमनस्य अनुक्षणं - "भवतः अत्यपूर्वम् एतत् दुर्गं दृष्ट्वा अहं स्वर्गम् एव स्मरामि । एतस्मिन् वयसि अपि भवान् सुन्दरः अस्ति । एवं तर्हि ७० वर्षेभ्यः पूर्वं भवान् कथं स्थितः स्यात् !" इति उक्तवती ।

तस्याः श्लाघनं श्रुत्वा मुदितः मान्त्रिकः - "यदि ७० वर्षेभ्यः पूर्वं भवती माम् अद्रक्ष्यत्, तर्हि आश्चर्यम् अन्वभविष्यत् । भवतु नाम । आवाम् उभौ अपि परस्परम् इष्टवन्तौ । मां परिणीय अस्मिन् स्वर्गे एव तिष्ठतु भवती" इति उक्तवान् ।

"एतत् मम अनुमतम् एव । किन्तु एकः सन्देहः । चोरभयं नास्ति खलु अत्र ?" इति भयं प्रदर्शयन्ती उक्तवती शशिकला ।



तदा मान्त्रिकः - "कीदृशं वचनं भवत्याः ? अत्र चोरभयं वा ? आवश्यकं चेत् एतत् दुर्गम् एव आकाशमार्गेण नीत्वा विन्ध्यपर्वतस्य उपरि स्थापयेयम् । तादृशसामर्थ्यम् अस्ति मम मन्त्रशक्तेः । भवतु नाम । भवत्याः समीपे तादृशानि आभरणानि कुत्र सन्ति, यानि च चोराः अपहरेयुः इति भीतिम् अनुभवति भवती ?" इति पृष्टवान् ।

झटिति स्वस्य अङ्गुलीयकं निष्कास्य प्रदर्शयन्ती - "पश्यतु, सामान्यम् अङ्गुलीयकम् एतत् इति मा चिन्तयतु भवान् । महत्त्वयुतम् अस्ति एतत् । कदाचित् कश्चित् योगी आकाशमार्गेण सञ्चरन् मार्गभ्रष्टः अभवत् । रात्रौ मम



गृहस्य प्रङ्गणे सः अवतीर्णः । वयं तं सत्कृतवन्तः । सन्तुष्टः सः एतत् अङ्गुलीयकं मह्यं दत्त्वा गतवान्'' इति उक्तवती शशिकला ।

एतत् श्रुत्वा आश्चर्यचकितः मान्त्रिकः - ''योगिना दत्तं वा ? किम् एतस्य वैशिष्ट्यम् ?'' इति पृष्टवान् ।

''एतत् धृत्वा पुरतः विद्यमानान् पुरुषान् यथा वयम् आज्ञापयामः तथैव आचरन्ति ते । मनुष्याणां मनःपरिवर्तनस्य सामर्थ्यम् एतस्मिन् अङ्गुलीयके अस्ति'' इति उक्तवती शशिकला ।

तस्याः वचनं श्रुत्वा मान्त्रिकः आशया अङ्गुलीयकं पश्यन् - ''जीवने मम एका अपेक्षा अस्ति । अहं कस्यापि देशस्य राजा भवितुं न इच्छामि । तादृशी दुराशा नास्ति मम । किन्तु कस्यचित् राज्ञः जामाता भवेयम् इति मम प्रबला इच्छा । एतस्मिन् घटे मत्स्यरूपेण काचित् राजकुमारी अस्ति । भवत्याः अङ्गुलीयकस्य प्रभावेण यथा सा मां परिणयेत् तथा करोतु भवती'' इति कथयन् स्वबडिशेन घटं स्पृष्टवान् । अनुक्षणं राजकुमारी पूर्वतनं रूपं प्राप्तवती । शशिकला संज्ञया रूपवतीं सूचयित्वा अङ्गुलीयकं प्रदर्श्य - ''कीदृशम् अपूर्वं सौन्दर्यं भवत्याः ! राजकुमारी इव दृश्यते खलु भवती ! वस्तुतः एषः अपि एवम् एव सुन्दरः । अस्वास्थ्यकारणतः एषः इदानीम् एवं दृश्यते । एषः भवत्या सह विवाहार्थम् अत्यन्तं योग्यः । एतं परिणेतुं सिद्धा खलु भवती'' इति पृष्टवती ।

रूपवती अनुक्षणम् - ''एतेन सह एव मम विवाहः भविष्यति'' इति उक्तवती ।

रूपवत्याः वचनं श्रुत्वा अत्यन्तम् आनन्दितः मान्त्रिकः नृत्यम् आरब्धवान् । सन्तोषातिरेकेण तस्य शरीरस्य नियन्त्रणम् अपगतम् । सः शशिकलाम् उद्दिश्य - ''प्रिये, तत् अङ्गुलीयकं मह्यं ददातु । 'मम पुत्रीं परिणेतुम् एषः अनर्हः' इति यदि राजा वदिष्यति, तर्हि राज्ञः मनःपरिवर्तनार्थम् एतस्य अङ्गुलीयकस्य उपयोगं करिष्यामि'' इति उक्तवान् ।

यदा सः अङ्गुलीयकं स्वीकर्तुं हस्तं प्रसारितवान्, तदा शशिकला मान्त्रिकस्य

हस्तं दृढम् आकृष्टवती । तस्मात् सः अधः पतितवान् । शशिकला अनुक्षणं तस्य हस्ते विद्यमानं बडिशं स्वीकृत्य तेन तं शिरशि दृढं ताडितवती । तदा मान्त्रिकः मत्स्यरूपेण परिवर्तितः अभवत् । लुण्ठनं कुर्वन् सः मत्स्यः सरोवरे पतितवान् ।

आनन्देन सखीम् आलिङ्ग्य रूपवती – ''शशिकले, भवत्याः चातुर्यम् अपूर्वम् अस्ति । भवत्याः विवाहसन्दर्भे भवत्यै स्वप्ने अपि ऊहितुम् अशक्यमेकम् उपायनं दास्यामि'' इति उक्तवती ।

राजभवनप्राप्तिसमये सूर्योदयः जातः आसीत् । सकुशलं प्राप्तवतीं पुत्रीं दृष्ट्वा राजा राज्ञी च सन्तुष्टौ । राजकुमारः नयसेनः तत्र आगतवान् ।

तदा रूपवती प्रवृत्तं सर्वं निवेद्य मातापितरौ उद्दिश्य – ''विशिष्टगुणयुक्तः कश्चित् परिणेतव्यः इति चिन्तयन्त्या मया मूर्खता आचरिता । स्वयं कष्टम् अनुभूतवती अहम् अन्यान् अपि कष्टे पातितवती । भवतोः अपेक्षानुगुणम् इदानीम् अमरावत्याः राजकुमारं परिणेतुम् अहं सिद्धा अस्मि'' इति उक्तवती ।

राजा राज्ञी च किमपि वक्तुम् उद्युक्तौ । तावति काले नयसेनः – ''क्षम्यतां राजकुमारि, मम परिणयविषये भवत्याः आक्षेपः न स्यात् । किन्तु भवत्याः परिणयविषये मम आक्षेपः अस्ति । मान्त्रिकस्य मायया कष्टम् अनुभवन्त्याः भवत्याः रक्षणं कृतवती अस्ति शशिकला । तस्याः वैशिष्ट्यं दृष्ट्वा अहं सन्तुष्टः अस्मि । अतः अहं शशिकलाम् एव परिणेतुम् इच्छामि'' इति उक्तवान् ।

नयसेनस्य वचनं श्रुत्वा लज्जया शिरः अवनमय्य स्थितवती शशिकला । तदा रूपवती मन्दहासपूर्वकम् उक्तवती – ''शशिकले, 'भवत्याः विवाहसमये अविस्मरणीयम् उपायनं दास्यामि' इति उक्तवती आसं खलु अहम् ? एतदेव मया दीयमानम् उपायनम्'' इति ।

अनन्तरं शुभे मुहूर्ते शशिकला-नयसेनयोः विवाहः सवैभवं सम्पन्नः ।



# परोपकारः

रामः नाम कश्चित् स्वकेदारे वर्धितानि कूष्माण्डानि वृषभशकटे आरोप्य विक्रयणार्थं नगरं प्रति गच्छन् आसीत् । गमनमार्गे अवरोधरूपेण काचित् महती शिला आसीत् । सा शिला अपसार्यते चेत् एव रामस्य शकटः अग्रे गन्तुं शक्नोति स्म । किन्तु तत् कार्यं रामः एकः एव कर्तुम् असमर्थः आसीत् । किं करणीयम् इति अजानन् रामः परितः दृष्टिं प्रसारितवान् । अनतिदूरे शयानः कश्चित् पुरुषः दृष्टः रामेण । तत्र गत्वा रामः तम् उत्थाप्य विषयं विवृतवान् । अनन्तरम् उभौ अपि सम्भूय मार्गे विद्यमानां तां शिलाम् अपसारितवन्तौ ।

रामः मार्गे अवरोधपूर्वकं शिलां स्थापितवतः अज्ञातस्य पुरुषस्य निन्दनं कुर्वन्, यः साहाय्यं कृतवान् तं 'परोपकारी' इति श्लाघमानः तं परोपकारिणम् पुरुषम् उद्दिश्य - ''भोः, भवता कुत्र गन्तव्यम्?'' इति पृष्टवान् ।

सः पुरुषः उक्तवान् - ''सिद्धपुरं गन्तव्यम्'' इति ।

तदा रामः तम् उद्दिश्य - ''तर्हि शकटम् आरोहतु । अहं पार्श्वस्थम् अमृतपुरं प्रति गच्छन् अस्मि'' इति उक्तवान् ।

यदा सिद्धपुरं सन्निहितं, तदा सः पुरुषः शकटात् अवतीर्य रामम् उद्दिश्य - ''मार्गे शिलां संस्थाप्य अवरोधम् अहम् एव कृतवान् । अन्यथा मा चिन्तयतु भवान्'' इति उक्तवान् ।

तत् श्रुत्वा आश्चर्येण रामः - ''किमर्थं भवान् तथा शिलां मार्गे स्थापितवान्? भवान् एव तथा कृतवान् इति अज्ञात्वा अहं भवन्तं निन्दितवान् खलु'' इति उक्तवान् ।

तदा सः पुरुषः मन्दहासपूर्वकम् - ''अहं नगरतः ग्रामं प्रति आगच्छन् आसम् । श्रान्तः सन् अहम् अग्रे गन्तुम् अशक्तः शिलां मार्गे अवरोधपूर्वकं स्थापयित्वा समीपे एव वृक्षस्य अधः शयनं कृतवान् । कथञ्चित् शिलाम् अपसारयितुम् अशक्ताः शकटचालकाः माम् आह्वयेयुः एव इति विश्वासः आसीत् मम । यतः एकेन अपसारयितुम् अशक्या शिला सा । भवतः तर्जनवचनानि किमर्थं सोढं मया इति भवान् कदाचित् पृच्छेत् । अहं यदि तथा न अकरिष्यं, तर्हि भवान् शकटम् आरोढुम् अनुमतिं न अदास्यत् खलु ! अतः मया समग्रं तर्जनं मौनं सोढम्'' इति उक्तवान् ।

तस्य उत्तरं श्रुत्वा रामः सम्यक् हसितवान् ।






५

[अनेकानि कष्टानि सहमानः रूपधरः कञ्चित् द्वीपं प्राप्तवान्, यश्च द्वीपः सुकेशिनीनामिकायाः देवतायाः वासस्थानम् आसीत् । द्वीपप्राप्तितः पूर्वम् एव, तन्नाम प्रयाणकाले, तस्य बहवः अनुचराः विविधैः कारणैः मरणं प्राप्तवन्तः आसन् । द्वीपं प्राप्तवान् रूपधरः स्वानुचरान् द्विधा विभज्य, मायाविनामकं वीरम् एकस्य गणस्य नायकरूपेण घोषितवान् । तस्मिन् द्वीपे सञ्चारार्थं प्रेषितवान् च । मायाविगणीयाः सुकेशिन्याः गृहं प्राप्तवन्तः । सुकेशिनी तान् कृत्रिमप्रीत्या सत्कृतवती । स्वमायया तान् वराहरूपेण परिवर्तितवती च । किन्तु रूपधरस्य विषये सा तथा कर्तुं न शक्ता । अनन्यगतिका सा रूपधरस्य आत्मीया जाता । तदनन्तरम्..........]

सुकेशिन्याः सूचनानुसारं रूपधरः समुद्रतीरे विद्यमानानाम् अनुचराणां समीपं गतवान् । ते सर्वे अपि अनुचराः चिन्ताक्रान्ताः सन्तः नौकायाः पार्श्वे उपविष्टवन्तः आसन् । नायकं रूपधरं दृष्ट्वा मातरं पश्यन्तः शिशवः इव धावन्तः आगत्य ते रूपधरं परितः स्थितवन्तः । इथाकाप्राप्तितः अपि यादृशः सन्तोषः न प्राप्येत, तादृशं सन्तोषं प्राप्तवन्तः आसन् ते । तेषां नेत्राभ्याम् आनन्दाश्रूणि निस्सरन्ति स्म ।

ते सर्वे अपि - "अस्माकम् इतरे सहचारिणः कुत्र ?" इति रूपधरं पृष्टवन्तः ।

तदा रूपधरः - "अस्मदीयाः सर्वे सुकेशिन्याः गृहे कुशलिनः सन्ति । सुखेन खादनपानादिषु निमग्नाः सन्ति । प्रथमं वयं नौकां तीरम् आनीय अस्माकं वस्तूनि



गुहायां सुरक्षितरूपेण स्थापयाम । अनन्तरम् अहं भवतः सर्वान् सुकेशिन्याः गृहं नेष्यामि'' इति उक्तवान् ।

अनुक्षणं ते कार्यम् आरब्धवन्तः । किन्तु मायावी तान् उद्दिश्य - ''मूर्खाः भवन्तः सर्वे । कुत्र गन्तुम् इच्छन्ति भवन्तः? किं सुकेशिन्याः गृहम् ? सा भवतः सर्वान् वृकरूपेण सिंहरूपेण वा परिवर्त्य गृहरक्षणकार्ये योजयेत् । किं चिन्तयन्ति भवन्तः? भाललोचनस्य गुहां प्रविष्टानाम् अस्मदीयानां का गतिः अभवत् इति जानन्ति खलु भवन्तः? तदा एषः रूपधरः एव तान् रक्षितवान् आसीत् इत्येतत् सत्यमेव चेदपि, एतस्य रूपधरस्य चिन्तनकारणात् एव तेषां नाशः अभवत् इत्यपि सत्यमेव '' इति उक्तवान् ।

एतानि वचनानि श्रुत्वा कुपितः रूपधरः खड्गम् आकृष्य मायाविनः शिरच्छेदनं कर्तुम् उद्युक्तः अभवत् । किन्तु अन्ये सर्वे रूपधरस्य सान्त्वनं कृतवन्तः ।

ते सर्वे अपि रूपधरम् उद्दिश्य - ''मायावी आगन्तुं न इच्छति चेत् अत्रैव भवतु । वयं भवता सह सुकेशिन्याः गृहम् आगमिष्यामः । अस्मान् तत्र नयतु'' इति उक्तवन्तः ।

किन्तु प्रस्थितान् सर्वान् दृष्ट्वा मायावी अपि तान् अनुसृतवान् । सुकेशिनी सर्वेषां निमित्तं स्नानादिव्यवस्थां कारयित्वा नूतनानि वस्त्राणि धारितवती । पूर्वमेव तत्र उपस्थिताः रूपधरस्य अनुचराः भोजनं कुर्वन्तः आसन् । उभयगणीयाः अपि परस्परदर्शनेन सन्तुष्टाः सन्तः नृत्यम् आरब्धवन्तः ।

सुकेशिनी रूपधरस्य समीपम् आगत्य - ''भवतः अनुचराः पूर्वतनकष्टानि विस्मृत्य तिष्ठन्ति चेत् एव वरम् । भवतां कष्टानि अहम् अवगन्तुं शक्नोमि । तत् सर्वं विस्मृत्य एते इदानीं सुखेन तिष्ठन्तु । एतं द्वीपम् अपि इथाकाम् एव भावयन्तु भवन्तः '' इति उक्तवती ।

सुकेशिन्याः अपेक्षानुगुणं रूपधरः एकं वर्षं यावत् अनुचरैः सह तत्रैव स्थितवान् । द्वितीयं वर्षं यदा आरब्धं तदा रूपधरस्य अनुचराः - ''किं भोः, अस्माकं गृहगमनं कदा? मातृभूमिः शीघ्रातिशीघ्रं द्रष्टव्या

इति अस्माकं प्रबला इच्छा । इतोऽपि कियत्कालम् अत्र स्थातव्यम् अस्माभिः ?'' इति पृष्टवन्तः ।

तदा रूपधरः सुकेशिनीम् उद्दिश्य - ''मम अनुचराः स्वदेशं गन्तुम् उत्सुकाः सन्ति । तेषां चिन्तनम् उचितमेव अस्ति । अस्माकं प्रयाणार्थं भवत्याः साहाय्यम् आवश्यकम्'' इति उक्तवान् ।

एतत् श्रुत्वा सुकेशिनी उक्तवती - ''बलात् भवतः सर्वान् अत्रैव निरोद्धुम् अहं न इच्छामि । स्वदेशं प्रति गमनात् पूर्वं भवद्भिः अन्यत् एकं प्रयाणं करणीयम् । यमलोकनामके नरके साङ्केतिकः नाम कश्चित् दिव्यज्ञानी अस्ति । मरणानन्तरम् अपि तस्य ज्ञानं नष्टं न अभवत् । भवद्भिः सः मेलनीयः, तस्य मार्गदर्शनं प्राप्तव्यं च'' इति ।

एतानि वचनानि श्रुत्वा निराशः सन् रूपधरः - ''हन्त! सुकेशिनि ! नरकं प्रति गमनं मया शक्यते वा? एतावत्पर्यन्तं कोऽपि नौकया नरकं गतवान् वा?'' इति पृष्टवान् ।

''नौकायाम् उपविश्य भवता नक्षत्राणां गणना करणीया नास्ति । नौकायाः वस्त्रपटं सम्यक् कृत्वा भवन्तः मौनम् उपविशन्तु । उत्तरदिशः यः वायुः वाति, सः स्वयं भवतां नौकां नरकं प्रति नेष्यति । समुद्रस्य क्रमणस्य अनन्तरं भवन्तः प्रथमं 'नाक'नामकं तीरं प्राप्स्यन्ति । तत्र नरकनामकाः वृक्षाः सन्ति । नौकां तीरे



संस्थाप्य भवन्तः पादाभ्यां यमलोकं गच्छन्तु । किञ्चित्कालानन्तरं तत्र एकः वप्रः दृश्यते । पार्श्वे एव अग्निनदी अश्रुनदी इत्येतयोः सङ्गमनेन उत्पन्ना वैतरणीनदी प्राप्यते । तस्य वप्रस्य पार्श्वे एव त्रिपादपरिमितम् एकं गर्तं करोतु भवान् । तस्मिन् गर्ते पितृदेवताभ्यः तर्पणं पिण्डप्रदानं च करोतु । एवं पितृदेवताः तर्पयित्वा प्रार्थयतु यत् सकुशलम् अस्मान् इथाकां प्रापयन्तु इति । 'गृहप्राप्तेः अनन्तरं बलिसमर्पणं करिष्यामि' इति प्रतिज्ञाम् अपि करोतु । 'साङ्केतिकाय पृथक् कृष्णम् अजं बलिरूपेण समर्पयामि' इत्यपि प्रार्थयतु । ततः यमधर्माय नरकवासिभ्यः च प्रणामान् समर्पयतु । अनन्तरं कश्चित्



इति विचिन्त्य आनन्देन आसन् । किन्तु गमनं यमस्य स्थानं नरकं प्रति इति यदा ज्ञातं तदा ते रोदनम् आरब्धवन्तः । केचन उन्मत्ताः इव रोदनं कुर्वन्तः केशान् उत्पाटितवन्तः । तथापि गमनं विना अन्यः मार्गः न आसीत् तेषाम् ।

नौकायाः समीपे सर्वेषां गमनात् पूर्वमेव सुकेशिनी तत्र उपस्थिता आसीत् । सा नौकायाः समीपे कश्चित् कृष्णम् अजं, एकं मेषं च स्थापयित्वा मौनं ततः निर्गतवती । ते सर्वे नौकां समुद्रं प्रति आकृष्य प्रयाणार्थं सज्जतां कृतवन्तः । मेषम् अजं च नौकायाम् आरोप्य ततः प्रस्थितवन्तः च ।

सुकेशिन्याः प्रभावेण उत्तरदिशः वायुः नौकाम् अग्रे नयति स्म । एवं सायङ्कालपर्यन्तं प्रयाणं निर्विघ्नरूपेण प्राचलत् । सूर्यास्तस्य अनन्तरं सर्वत्र अन्धकारः प्रसृतः । अन्धकारे एव नौका तीरं प्राप्नोत् ।

सुकेशिन्याः कथनानुगुणं रूपधरः अग्निनदी-अश्रुनद्योः सङ्गमप्रदेशे गर्तं कृत्वा पितृभ्यः तर्पणं दत्तवान् । पिण्डप्रदानं कृत्वा पितॄन् प्रार्थितवान् । अनन्तरम् अग्रये अजमेषौ बलिरूपेण समर्पितवान् । अनुक्षणं पितरः उच्चध्वनिना सम्भाषमाणाः बलिं स्वीकर्तुम् आगतवन्तः ।

तदा रूपधरः यमधर्मं नरकवासिनः च नमस्कृत्य पितॄन् उद्दिश्य - "अहं साङ्केतिकम् उद्दिश्य कांश्चन प्रश्नान् प्रष्टुम्

कृष्णम् अजं, मेषं च बलिरूपेण अग्रये समर्पयतु । तावति काले पितृदेवताः बलिस्वीकरणार्थम् आगमिष्यन्ति । तेषु साङ्केतिकः अपि भविष्यति । सः भवतां गृहगमनमार्गम् उपायं च यावत् न वदिष्यति तावत् पितृदेवताभिः यथा बलिः स्वीकृता न भवेत् तथा भवद्भिः सर्वैः सम्भूय जागरूकता आश्रयणीया" इति उक्तवती सुकेशिनी ।

तावता सर्वत्र प्रकाशः प्रसृतः आसीत् । रूपधरः अनुचरान् जागरयित्वा उक्तवान् - "उत्तिष्ठन्तु भोः, इतः अस्माभिः गन्तव्यम् अस्ति । सुकेशिनी सर्वविध-व्यवस्थाः कल्पितवती अस्ति" इति ।

वराकाः रूपधरस्य अनुचराः गृहगमनम्

इच्छामि । कृपया तावत्पर्यन्तं बलिस्पर्शं मा कुर्वन्तु भवन्तः'' इति प्रार्थितवान् ।

तावति काले तान् सर्वान् अपसारयन्ती काचित् स्त्री अग्रे आगतवती । तां दृष्ट्वा रूपधरः अत्यन्तं चकितः अभवत् । यतः सा रूपधरस्य माता आसीत् । यदा रूपधरः ट्रायदेशं प्रति युद्धार्थं गतवान् आसीत्, तदा तदीया माता जीवति स्म । माता कदा दिवङ्गता इति रूपधरः न जानाति स्म । तादृशस्थितौ मातरं दृष्ट्वा दुःखितः रूपधरः नेत्राभ्याम् अश्रूणि स्रावयन् व्याकुलः अभवत् । तथापि सः मातरं बलिसमीपं न प्रेषितवान् । तस्याः पृष्ठतः एव साङ्केतिकः सुवर्णदण्डं गृहीत्वा आगतवान् । सः रूपधरम् अभिज्ञाय - ''सूर्यकिरणाः अपि यत्र न प्रविशन्ति, तादृशं स्थानं प्रति भवान् किमर्थम् आगतवान्? भवान् किञ्चित् अपसरति चेत् बलिं स्वीकृत्य भवतः यत् साहाय्यम् अपेक्षितं तत् करिष्यामि'' इति उक्तवान् ।

तदा रूपधरः अपसृत्य बलि-स्वीकरणार्थं साङ्केतिकाय अवसरं कल्पितवान् । ततः साङ्केतिकः रूपधरम् उद्दिश्य -''वत्स, भवान् स्वदेशं गन्तुम् उत्सुकः अस्ति । स्वदेशस्य अपेक्षया सुन्दरः स्वर्गः अन्यः नास्ति । किन्तु देवताः भवतः विषये कुपिताः सन्ति । अतः भवता पुनः कष्टानि अनुभूयन्ते । महान्ति कष्टानि आपतितानि चेदपि भवान् सकुशलं गृहं प्राप्स्यति । गृहगमनमार्गे



भवान् त्रवासीनामकं द्वीपं प्राप्स्यति । तत्र सूर्यसम्बद्धाः पशवः भवन्ति । भवता, भवदनुचरैः वा पशूनां पीडनं न करणीयम् । यदि किमपि भविष्यति, तर्हि भवदनुचराः नौकाः वा स्वदेशं न प्राप्स्यन्ति । भवान् केवलः कथञ्चित् स्वप्राणान् रक्षन् अन्यनौकया गृहं प्राप्स्यति । तथापि भवतः कष्टानि समाप्तानि न भविष्यन्ति । भवतः गृहं शत्रुभिः पूर्णं भविष्यति । ते सर्वे अपि शत्रवः 'मां वृणोतु' इति वदन्तः भवतः पत्नीं पीडयिष्यन्ति । भवान् महता कष्टेन शत्रूणां संहारं करिष्यति । अनन्तरं भवता देवाः प्रार्थनीयाः । तत् कथम् इति अहं वदिष्यामि । नौकाचालनार्थं यः दण्डः



उपयुज्यते तं दण्डं स्वीकृत्य पाके लवणस्य उपयोगमेव ये न जानन्ति, जीवने कदापि ये समुद्रस्य परिचयमेव न प्राप्तवन्तः, तादृशानां वासस्थलं गच्छतु भवान् । तादृशस्य स्थलस्य अभिज्ञानं कथम् इति वदामि, शृणोतु । भवान् यदा नौकादण्डं स्कन्धे आरोप्य गच्छति, तदा गमनमार्गे नौकादण्डस्य परिचयस्य अभावतः केचन तं नौकादण्डं दृष्ट्वा पृच्छन्ति यत् एतत् कृषिकार्यार्थम् उपयुज्यमानं हलं वा? इति । तादृशाः मनुष्याः यत्र मिलन्ति, तस्मिन् प्रदेशे भवतः नौकादण्डं भूमौ निखाय भवान् वरुणदेवाय एकं मेषम्, एकं वृषभम्, एकं वराहं च बलिरूपेण दत्त्वा गृहं प्रति गच्छतु । भवान् दीर्घकालं यावत् जीविष्यति । अन्ते समुद्रे एव निश्चिन्तः सन् मरणं प्राप्स्यति । तदा बान्धवाः सर्वे भवतः निकटे एव भविष्यन्ति'' इति भविष्यम् उक्तवान् ।

तदा रूपधरः - ''भवतु नाम । विधिलिखितं परिवर्तयितुं को वा शक्नोति ? तत्र मम मातुः प्रेतात्मा स्थितवान् अस्ति । सा मां द्रष्टुं न शक्नोति । मया सह सम्भाषणं कर्तुम् अपि न शक्नोति सा । सा बलिम् एव पश्यन्ती अस्ति । अतः ताम् अभिज्ञातुं कोऽपि मार्गः अस्ति चेत् कृपया वदतु'' इति उक्तवान् ।

''वत्स, बलेः स्पर्शात् पूर्व पितृदेवताः सत्यांशं ज्ञातुं न शक्नुवन्ति । वक्तुमपि न शक्नुवन्ति । एतं विषयं स्मरतु'' इति उक्तवान् साङ्केतिकः ।

ततः सः रूपधरम् आशिषा अनुगृह्य यमलोकं प्रति गतवान् ।

रूपधरस्य माता बलिं स्वीकृतवती । तावत्पर्यन्तं रूपधरः तत्रैव स्थितवान् आसीत् । बलिस्वीकरणानन्तरं सा शिरः उन्नीय पुत्रं दृष्ट्वा तम् अभिज्ञातवती । पुत्रम् उद्दिश्य - ''वत्स, जीवन् भवान् एतं लोकं कथं प्रविष्टवान् ? केनापि तथा आगन्तुं न शक्यते खलु । भवान् ट्रायुतः आगतवान् वा? इतोऽपि इथाकां प्रति न गतवान् वा? पत्नीं न दृष्टवान् वा?'' इत्यादीन् बहून् प्रश्नान् पृष्टवती ।

तदा रूपधरः उक्तवान् - ''नास्ति

अम्ब ! अहं स्वदेशं प्राप्तुं महत् कष्टम् अनुभवन् अस्मि । अत्रत्यस्य साङ्केतिकस्य मार्गदर्शनं प्राप्तुम् अत्र आगन्तव्यम् अभवत् । भवती कथं मृता? ज्वरः आसीत् वा भवत्याः? अथवा आकस्मिकं मरणं प्राप्तवती वा भवती ? पिता कथम् अस्ति? मम पुत्रः इदानीं किं कुर्वन् अस्ति? ते सर्वे अपि मयि विश्वस्य मम प्रतीक्षायां सन्ति, उत मम प्रत्यागमनम् असम्भवम् इति मत्वा अन्यस्य आश्रये सन्ति? मम पत्नी कथम् अस्ति? सा किं कर्तुम् इच्छति? अस्माकं सम्पदः रक्षणं कुर्वती अस्ति, उत अन्यं कञ्चित् परिणीतवती सा? अस्माकं देशस्य जनाः सुखेन एव सन्ति, उत प्रतिदिनं कष्टम् अनुभवन्ति ? राज्यपरिपालनं सम्यक् प्रचलत् अस्ति वा न वा ? मम निर्गमनानन्तरं देशे विशेषपरिवर्तनं किमपि अभवत् वा ?'' इति ।

तदा रूपधरस्य माता -''भवतः पत्नी गृहे एव अस्ति । तस्याः सहनशीलता अवर्णनीया । प्रतिदिनं तस्याः हृदयं दुःखेन तप्यमानम् अस्ति । भवतः सर्वा अपि सम्पत् इदानीम् अपि भवतः नाम्नि एव अस्ति । भवतः पुत्रः विजयध्वजः भवतः प्रतिनिधिः सन् कार्याणि निर्वहन् अस्ति । किन्तु भवतः पिता ग्रामं त्यक्त्वा नगरम् आगत्य स्थातुं न इच्छति । शैत्यकाले आच्छादयितुं तस्य समीपे कम्बलम् अपि नास्ति । गोष्ठे कम्पमानः शयनं करोति सः । अन्यसमये द्राक्षावने अटनं करोति । 'मया वार्धक्यं प्राप्तं चेदपि मम पुत्रः न प्रत्यागतवान्' इति चिन्तया सः खिन्नः अस्ति । मम मरणं तु भवतः विषयिण्या चिन्तया एव अभवत्'' इति उक्तवती ।

रूपधरः मातुः आलिङ्गनं कर्तुम् इष्टवान् । किन्तु तथा कर्तुं सः न शक्तः । तस्य प्रयत्नाः विफलाः अभवन् । अनुक्षणं रूपधरस्य माता - ''वत्स, अन्धकारमयम् एतं प्रदेशं त्यक्त्वा सत्वरं स्वदेशं गच्छतु । किन्तु अत्र दृष्टं विषयं पत्नीं वदतु, न अन्यम्'' इति उक्तवती । (अनुवर्तते)



# वस्तुस्थितिः

कस्मिंश्चित् ग्रामे देवराजः नाम कश्चित् भूस्वामी आसीत् । भीमः नाम इति कश्चित् भूस्वामिनः कार्यालये कार्यं करोति स्म । कार्यालये पीठोपकरणानां धूलिमार्जनं, भित्तौ विद्यमानानां ऊर्णनाभजालानां निवारणं च भीमस्य कार्यम् आसीत् । भीमः एतानि कार्याणि श्रद्धया न करोति स्म । किन्तु भूस्वामिना ताम्बूलस्थापनार्थम् उपयुज्यमानां रजतपेटिकां तु अत्यन्तं श्रद्धया स्वच्छीकरोति स्म ।

भूस्वामी एतं विषयम् अवलोकितवान् आसीत् । कदाचित् भूस्वामी भीमम् आहूय - "भीम ! केभ्यश्चित् दिनेभ्यः भवति आलस्यं वर्धमानम् अस्ति । कार्यालयं सम्यक् न स्वच्छीकरोति भवान् । किन्तु आश्चर्यं नाम मम ताम्बूलपेटिकां तु भवान् श्रद्धया स्वच्छीकरोति । अतः अहं सन्तुष्टः अस्मि । तस्मात् भवतः विषये मम विशेषप्रीतिः अस्ति" इति उक्तवान् ।

तदा भीमः विनयेन - "स्वामिन् ! अत्र श्लाघनयोग्यं तावत् किम् अस्ति ? भवान् इव अहम् अपि ततः ताम्बूलं स्वीकृत्य सेवनं करोमि । एवं सति पेटिकायाः स्वच्छीकरणं न करोमि चेत् अनौचित्यं स्यात् खलु !" इति उक्तवान् ।

सत्यांशं ज्ञातवान् भूस्वामी, ताम्बूलपेटिका भीमस्य हस्तलभ्या यथा न भवेत् तथा कुत्रापि स्थापितवान् ।





# अपूर्वः दर्पणः

साहसकार्यकरणम् एव स्वस्य जीवनस्य लक्ष्यं मन्यमानः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् -"अये राजन् ! भवान् कस्य अपूर्ववस्तुनः निमित्तं मध्यरात्रसमये अस्मिन् श्मशाने महान्तं परिश्रमं वहन् अस्ति इति न ज्ञायते मया । अपूर्वाणि वस्तूनि अपि कदाचित् शक्तिरहितानि भवन्ति इत्यस्य निदर्शनार्थं कस्यचित् राजकुमारस्य कथां श्रावयामि, यश्च अपूर्वं दर्पणं प्राप्य अपि तस्माद्र् प्रयोजनप्राप्तौ विफलः जातः। श्रद्धया तां कथां श्रृणोतु तावत्, येन भवतः मार्गायासः परिहृतः स्यात्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं गजेन्द्रनामकः कश्चित् मुनिवर्यः पर्वतप्रदेशे निवसति स्म । सकल-

वेतालकथा



शास्त्रपारङ्गतस्य तस्य आश्रमे बहवः युवकाः शिष्यत्वेन स्थितवन्तः आसन् ।

तस्य शिष्येषु सिंहपुरस्य राजकुमारः शिवदत्तः अपि अन्यतमः। शिवदत्तः चतुर्भ्यः वर्षेभ्यः गजेन्द्रस्य आश्रमे वसन् सर्वाः विद्याः अभ्यस्तवान् । विद्याभ्यास-समाप्तेः अनन्तरं शिष्याणां प्रतिगमनसमयः सन्निहितः । तेषां गमनसमये गुरुः गजेन्द्रः स्वशिष्याणां योग्यतानुगुणं किमपि वस्तु उपायनरूपेण ददाति स्म । शिवदत्तस्य प्रस्थानसमये गजेन्द्रः वात्सल्येन तस्य शिरः आमृशन् -"वत्स! इदानीं भवतः विद्याभ्यासः पूर्णः जातः अस्ति । सिंहपुरस्य युवराजाय भवते अहम् अपूर्वम् उपायनमेकं दास्यामि" इति वदन् स्वस्य प्रसेवात् गोलाकारकं दन्तनिर्मितं दर्पणं निष्कास्य शिवदत्ताय दत्त्वा उक्तवान् - "एषः अपूर्वः दर्पणः। यः एतस्य पुरतः तिष्ठति, तद्विषये विवरणं वदति एषः। भवान् एतस्मात् दर्पणात् स्वकार्ये प्रयोजनं प्राप्नोतु । अपि च 'दक्षः राजा' इति कीर्तिं सम्पादयतु । यदा एतस्य दर्पणस्य आवश्यकता नास्ति इति भवान् चिन्तयिष्यति, तदा एतं मह्यं प्रत्यर्पयतु" इति ।

राजकुमारः शिवदत्तः गुरुणा दत्तं दर्पणं स्वीकृत्य तस्मै कृतज्ञताः समर्प्य ततः सिंहपुरं गतवान् । कांश्चन मासान् यावत् सुखेन कालयापनं कृतवान् च । केषाञ्चित् मासानाम् अनन्तरं सः पितुः इच्छानुसारं सिंहासनम् आरूढवान् ।

कदाचित् सिंहलदेशतः वीरभूपति-नामकः मल्लयोधः, धीरसिंहनामकः खड्ग-विद्यानिपुणः, भूपालसिंहनामकः धनुर्विद्यानिपुणः च सिंहपुरम् आगतवन्तः । ते राज्ञः शिवदत्तस्य दर्शनं प्राप्य प्रार्थितवन्तः - "महाराज ! अस्मासु त्रिषु कः शक्तिमान् इति वक्तुं कोऽपि न शक्तः । 'भवतः सकाशे अपूर्वः दर्पणः अस्ति । तस्य दर्पणस्य साहाय्येन भवान् क्लिष्टाः अपि समस्याः परिहरिष्यति' इति ज्ञात्वा वयम् अत्र आगताः स्मः । अस्मासु कः बलवान् इति कृपया वदतु भवान्" इति ।

युद्धविद्याः आयोज्य तेषां त्रयाणाम्

अपि अपूर्वं नैपुण्यं प्रत्यक्षं दृष्टवान् शिवदत्तः । अनन्तरं सः तान् त्रीन् अपि दर्पणस्य पुरतः स्थापयित्वा दर्पणम् उद्दिश्य उक्तवान् - "एतेषु त्रिषु शूरतमः कः इति वदतु भवान्" इति ।

किन्तु दर्पणतः किमपि उत्तरं न आगतम् । एतस्मात् शिवदत्तः नितरां चकितः अभवत् । 'अपूर्वः दर्पणः अपि अस्माकं समस्यां परिहर्तुम् अशक्तः' इति चिन्तया एव ते त्रयः अपि ततः निर्गताः।

कानिचन दिनानि अतीतानि । कोसलदेशतः सोमसुन्दरः विजयदेवः च शिवदत्तस्य समीपम् आगतवन्तौ । तौ उभौ अपि मल्लयुद्धनिपुणौ आस्ताम् । तयोः कः निपुणतरः इति समस्या । यतः मल्लयुद्धस्पर्धायां ताभ्यां बहुवारं भागः ऊढः आसीत् । सर्वदा उभौ अपि समान-शक्तिमन्तौ इत्येव निर्णयः जातः आसीत् ।

शिवदत्तः अपूर्वं दर्पणम् उद्दिश्य पृष्टवान् - "हे दर्पण ! सोमसुन्दर-विजय-देवयोः शूरतरः कः ?" इति ।

अपरक्षणे एव दर्पणः उत्तरम् उक्तवान् - "विजयदेवः" इति ।

अपूर्वस्य दर्पणस्य सामर्थ्यं किञ्चिदपि न्यूनं न जातम् इति सन्तुष्टः शिवदत्तः पुनरपि दर्पणं पृष्टवान् - "विजयदेवः कथं सोमसुन्दरात् शक्तिमान् ?" इति ।

तदा दर्पणेन उक्तम् - "केनचित् मान्त्रिकेण दत्तं तायकं स्वभुजे बद्धवान् अस्ति सोमसुन्दरः । अतः सः सर्वविषयेषु




अपि जयं प्राप्नुवन् अस्ति" इति ।

एतस्य वचनस्य श्रवणमात्रेण दर्पणस्य पुरतः स्थितवतः सोमसुन्दरस्य मुखं कान्तिहीनं जातम् । वस्तुस्थितेः ज्ञानात् कुपितः विजयदेवः सोमसुन्दरस्य भुजे बद्धं तायकं बलात् निष्कास्य क्षिप्तवान् ।

अनन्तरं तयोः मल्लयुद्धार्थं सर्वाः व्यवस्थाः कल्पितवान् शिवदत्तः । अपूर्वस्य दर्पणस्य वचनानि वास्तविकानि इति निरूपयन् इव विजयदेवः बलात् सोमसुन्दरं प्रताड्य अधः पातितवान् ।

रत्नपुरं वज्रपुरं च सिंहपुरस्य प्रतिवेशिराज्यद्वयम् । तत् राज्यद्वयं सिंहपुरस्य सामन्तराज्यम् अपि । रत्नपुरस्य राजकुमारी विजयमाधवी, वज्रपुरस्य



राजकुमारी चन्द्रकला च अप्रतिमसुन्दर्यौ इति श्रुतवान् आसीत् शिवदत्तः । सः तयोः उभयोः अपि भावचित्रम् आनाय्य दृष्टवान् । उभे अपि सौन्दर्येण समाने आस्ताम् । तयोर्मध्ये सुन्दरतरा का इति निर्णेतुम् अशक्तः शिवदत्तः तयोः मातापितृभ्यः वार्तां प्रेषितवान् यत् - पुत्र्या सह सिंहपुरम् आगच्छन्तु इति ।

अनन्तरदिने एव सामन्तराजौ उभौ अपि राजकुमारीभ्यां सह सिंहपुरम् आगतवन्तौ । शिवदत्तः अतिथिगृहे तेषां वसतिव्यवस्थां कल्पितवान् ।

कदाचित् सायङ्कालसमये शिवदत्तः सामन्तराजौ दृष्ट्वा उक्तवान् - ''मम आह्वानं पुरस्कृत्य भवन्तौ अत्र आगतवन्तौ इति यत् तेन अहं सन्तुष्टः अस्मि । भवतोः अत्र आह्वानस्य कारणम् एतावता एव भवद्भ्याम् ऊहितं स्यात् अपि । तथापि स्पष्टज्ञानार्थम् अहं वदिष्यामि । राजकुमार्योः विजयमाधवी-चन्द्रकलयोः भावचित्रदर्शनात् अपि सुन्दरतरा का इति निर्णेतुम् अशक्तः जातः अहम् । इदानीम् अहं विजयमाधवीं चन्द्रकलां च प्रत्यक्षं पश्यन् अस्मि । तथापि एतयोः का सुन्दरतरा इति अहं निर्णेतुं न शक्नोमि । अतः एतस्याः समस्यायाः परिहारम् अपूर्वदर्पणस्य साहाय्येन प्राप्तुं शक्नुमः वयम् । राजकुमार्यौ दर्पणस्य पुरतः तिष्ठतः चेत् सौन्दर्यवती का इति अपूर्वदर्पणः वदिष्यति'' इति ।

अनुक्षणं चन्द्रकला - ''अहं स्पधार्थं सिद्धा अस्मि'' इति वदन्ती गत्वा दर्पणस्य पुरतः स्थितवती । किन्तु विजयमाधवी मन्दहासं प्रकटय्य उक्तवती - ''युवराजः अन्धः इति इदानीं ज्ञातं मया । अन्धस्य परिणयापेक्षया अविवाहिततया स्थितिः एव श्रेयस्करी'' इति ।

क्षणं यावत् शिवदत्तः विजयमाधव्याः वचनात् कुपितः चेदपि अनन्तरं तस्याः कथनस्य भावम् अवगत्य मन्दहासपूर्वकं तस्याः पितरम् उक्तवान् - ''भवतः पुत्रीं विजयमाधवीम् अहम् ईष्टवान् अस्मि । यदि तस्याः अपि सम्मतिः अस्ति, तर्हि इदानीम् एव विवाहसन्नाहः भवतु'' इति ।

शिवदत्तस्य एतत् वचनं श्रुत्वा

विजयमाधव्याः मातापितरौ, तत्रत्याः राजोद्योगिनः च नितराम् आश्चर्यचकिताः ।

कानिचन दिनानि अतीतानि । शिवदत्त-विजयमाधव्योः विवाहः सवैभवं सम्पन्नः ।

मासः अतीतः । वीरभद्रनामकः राजभवनस्य रक्षकः राज्ञ्या विजयमाधव्या आभरणपेटिकायाः उपरि स्थापितं चन्द्रहारं चोरयित्वा उद्यानस्थस्य अशोकवृक्षस्य कोटरे स्थापितवान् । 'हारस्य अदृश्यता-कारणात् राजभवने कोलाहलः भविष्यति एव । यदा कोलाहलः शान्तः भविष्यति, तदा हारं गृहं नेष्यामि' इति चिन्तितवान् आसीत् वीरभद्रः ।



किन्तु वीरभद्रेण वृक्षकोटरे हारस्थापनं मल्लिकानामिकया दास्या दृष्टम् आसीत् । वीरभद्रस्य निर्गमनानन्तरं मल्लिका तं हारं स्वीकृत्य गृहं गतवती ।

राज्ञी विजयमाधवी चन्द्रहारस्य अदर्शनविषयं पतिं निवेदितवती । अन्तःपुरस्य दासीषु कयाचित्, रक्षकभटेषु केनचित् वा हारः चोरितः स्यात् इति विचिन्त्य शिवदत्तः तान् सर्वान् आनीय अपूर्वदर्पणस्य पुरतः स्थापयित्वा दर्पणम् उक्तवान् - ''हे अपूर्वदर्पण ! चन्द्रहारस्य चोरः कः इति वदतु'' इति ।

भटाः दास्यः च एकैकशः अपूर्वदर्प्रणस्य अग्रभागतः अपरपार्श्वं गतवन्तः । दर्पणस्य पुरतः गमनसमये मल्लिका चातुर्येण वीरभद्रस्य पृष्ठतः स्थितवती । स्वस्य पर्यायः यदा आगतः तदा वीरभद्रस्य शरीरे भयात् कम्पनम् आरब्धम् । तावता दर्पणः उक्तवान् - ''वीरभद्रः चोरः'' इति ।

एतत् श्रुत्वा मल्लिका उरसि हस्तं स्थापयित्वा - ''हाँ, रक्षिता अहम्'' इति मन्दस्वरेण स्वगतम् उक्तवती । एतत् अकस्मात् राज्ञ्या विजयमाधव्या दृष्टम् । सा तत्क्षणं भटान् आज्ञप्तवती यत् मल्लिकायाः बन्धनं कुर्वन्तु इति ।

एतस्मात् आश्चर्यचकितः शिवदत्तः - ''माधवि ! किमिदम् ? हारस्य चोरः वीरभद्रः इति दर्पणेन एव उक्तं खलु ! एवं सति निरपराधिन्याः मल्लिकायाः बन्धनं किमर्थम् ?'' इति पृष्टवान् ।



''अत्र मल्लिका अपि सहभागिनी इति मम सन्देहः'' इति उक्तवती विजय-माधवी ।

तदा शिवदत्तः तर्जनस्वरेण मल्लिकाम् उद्दिश्य - ''कोऽपि अपराधी सुलभतया अस्मान् वञ्चयितुं न शक्नोति । वस्तुतः किं प्रवृत्तम् इति वदतु भवती'' इति उक्तवान् ।

एतस्मात् भीता मल्लिका शिवदत्तस्य पादयोः पतित्वा प्रवृत्तं सर्वं निवेदितवती, गृहतः हारम् आनीय शिवदत्ताय दत्तवती च । शिवदत्तः चन्द्रहारं विजयमाधव्याः कण्ठे स्थापयित्वा तस्याः चातुर्यम् अभिनन्दितवान् ।

अनन्तरं शिवदत्तः पत्नीम् उद्दिश्य - ''एतस्मात् अपूर्वदर्पणात् लाभः यथा, तथा हानिः अपि अस्ति । एतस्य प्रयोजनं सीमितम् इति इदानीं प्रमाणितम् अभवत् । अतः एतं दर्पणम् अद्य एव मम गुरवे प्रत्यर्पयिष्यामि'' इति उक्तवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! मुनिवर्येण गजेन्द्रेण शिवदत्ताय यः दर्पणः दत्तः, सः केषुचित् सन्दर्भेषु समाधानकरम् उत्तरं न दत्तवान् । एतस्मात् दर्पणस्य सामर्थ्यविषये सन्देहः उत्पद्यते । त्रिषु वीरेषु शूरतमः कः इति कथने विफलः जातः दर्पणः । किन्तु मल्लयोधयोः सोमसुन्दर-विजयदेवयोः विषये समाधानकरं निर्णयम् उक्तवतः दर्पणस्य स्वभावः विचित्रः इव भासते । राजकुमार्योः सौन्दर्यनिर्णयसन्दर्भे विजय-माधवी दर्पणस्य पुरतः स्थातुं किमर्थं न इष्टवती इति तु न ज्ञायते । 'राजकुमार्या चन्द्रकलया सह स्पर्धायां जयं प्राप्तुं न शक्नोमि' इति विजयमाधव्याः चिन्तनं स्यात् वा ? तदास्तां तावत् । सर्वाङ्गसुन्दरः मन्मथसदृशः शिवदत्तः न विकलाङ्गः । एवं सत्यपि 'सः अन्धः' इति तस्य उपहासं कुर्वत्या विजयमाधव्या यत् उक्तं तत् अविवेकिनां लक्षणं खलु ! उपहासं कृतवतीम् अपि तां शिवदत्तः मनसा इष्टवान् । एषः मूर्खतायाः परमावधिः खलु ! अपूर्वदर्पणात् लाभः हानिः चेति उभयम् अपि सम्भवति इति किमर्थं चिन्तितं शिवदत्तेन ? अपूर्वस्य अपि दर्पणस्य गुरवे प्रतिदानम् अविवेकिनां

लक्षणं खलु ! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''दर्पणः अपूर्वः महिमयुतः च इत्यत्र नास्ति सन्देहः । किन्तु तस्यापि काचित् सीमा अस्ति इत्यपि वास्तविकः अंशः एव। सिंहलदेशतः आगताः वीरभूपतिः, धीरसिंहः, भूपालसिंहः च शौर्ये साहसे च समानाः इत्यत्र नास्ति सन्देहः । अतः एव तेषां मध्ये स्पर्धा न युज्यते । एतस्मात् कारणात् एव दर्पणः त्रिषु शूरतमं न सूचितवान्, अपि तु मौनं आश्रितवान् । किन्तु सोमसुन्दर-विजयदेवयोः विषये निर्णयं श्रावयितुं शक्तः जातः दर्पणः । राजकुमारी विजयमाधवी सौन्दर्यनिर्णयार्थं दर्पणस्य पुरतः स्थितिं निराकृतवती इति यत्, तत् पराजयभीत्या न । पुरतः स्थितवत्योः राजकुमार्योः सौन्दर्यनिर्णयं शिवदत्तः स्वयं कर्तुं न शक्तवान्, अपि तु तत् दायित्वं दर्पणे आरोपितवान् । एतस्मात् विजयमाधवी कुपिता । अतः एव सा 'शिवदत्तः अन्धः' इति उक्तवती । तस्याः वचनस्य भावम् अवगत्य एव शिवदत्तः तां परिणीतवान् । अपूर्वदर्पणस्य शक्तिः परिमिता अस्ति इति विषयं ज्ञात्वा मल्लिका चौर्यं कृत्वा अपि आत्मानं रक्षितुम् इष्टवती । किन्तु विजयमाधव्याः सूक्ष्म-परिशीलनेन चातुर्येण च प्रमाणितः अभवत् यत् मल्लिका एव चौर्यं कृतवती इति । एतां घटनां परिलक्ष्य शिवदत्तः चिन्तितवान् यत् अपूर्वदर्पणस्य वचनात् कदाचित् सत्यस्थितिः अपि न ज्ञायते इति । अपूर्वस्य साधनस्य अपेक्षया बुद्धिशक्तेः उपयोगेन समस्यापरिहारः एव वरम् इति विचिन्त्य शिवदत्तः निश्चितवान् यत् गजेन्द्राय दर्पणः प्रतिदातव्यः इति । शिवदत्तस्य निर्णयः सन्दर्भोचितः अस्ति'' इति ।

एवं वदतः राज्ञः मौनभङ्गः यदा जातः, तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# आलस्यसमस्या

देवपुरी समुद्रतीरे स्थिता काचित् नगरी । तत्र चन्द्रदेवः नाम कश्चित् वणिक् आसीत् । तस्य सुविशालं वाणिज्यम् आसीत् । अतः तस्य कार्यालये उद्योगिनः अपि बहवः आसन् । किन्तु ते सर्वे न कर्मशीलाः । तेषु केचन अलसाः अपि आसन् । व्यर्थवार्तालापेन कालहरणं कुर्वन्ति स्म ते ।

चन्द्रदेवस्य कार्यालये मणिकण्ठः नाम कश्चन उद्योगी आसीत् । सः न अलसः । सदा श्रद्धया कार्यं करोति स्म सः । तावदेव न, सः अन्येषां कार्यम् अपि स्वयं करोति स्म । अतः अलसाः केचन स्वयं कार्यम् अकुर्वन्तः, मणिकण्ठेन कृतं कार्यं 'मया एव कृतम्' इति वदन्तः व्यर्थकालयापनं कुर्वन्ति स्म ।

कर्मकराणाम् एतां प्रवृत्तिम् अवलोकितवान् आसीत् चन्द्रदेवः । अतः सः कदाचित् सर्वान् उद्योगिनः मेलयित्वा उक्तवान् - ''मम कार्यालये केचन आलस्येन व्यवहरन्ति इति ज्ञातम् अस्ति मया । एतत् अहं न सहे । इतःपरं यदि कोऽपि मम कार्यालये आलस्यं प्रदर्शयति, तर्हि तस्मै 'अलसः' इति उपाधिं दास्यामि'' इति । एतस्याः सूचनायाः अनन्तरं बहूनां व्यवहारे परिवर्तनं जातम् ।

किन्तु सोमः नाम कश्चन उद्योगी यथापूर्वम् आलस्येन एव व्यवहरति स्म । अतः चन्द्रदेवः पुनः कदाचित् सर्वान् मेलयित्वा उक्तवान् - ''यः अन्यैः कृतं कार्यम् अपि 'मया कृतम्' इत्येव वदन् अटति, सः न केवलम् अलसः, अपि तु अलसशिखामणिः । अतः अस्मत्कार्यालयीयाय सोमाय 'अलसशिखामणिः' इति उपाधिः दीयते मया'' इति ।

एतस्मात् नितराम् अपमानितः लज्जितः च सोमः स्वस्य आलस्यप्रवृत्तिं परित्यज्य कार्ये श्रद्धां प्रदर्शयितुम् उद्युक्तः अभवत् । एतदनन्तरं चन्द्रदेवस्य कार्यालये एषा आलस्यसमस्या पुनः कदापि न उद्भूता एव ।



समुद्रतीरपरिचयः - १

# कच्छतीरं सौराष्ट्रतीरं च

रचना- मीरा उग्रा, चित्राणि- गोपीकुमारः

प्रपञ्चे सुदीर्घः समुद्रतीरप्रदेशः येषां देशानाम् अस्ति तादृशेषु भारतदेशः अन्यतमः । अस्माकं ७,५०० कि. मी. परिमितः दीर्घः समुद्रतीरप्रदेशः अस्ति । एतस्मिन् सुदीर्घे तीरप्रदेशे सुधांश-युक्तशिलानां खनयः, सरोवराणि, मरुस्थलानि, चारित्रिकभवनानि, प्राचीनानि नूतनानि च नगराणि, प्रमुखाणि नौकास्थानानि, धीवराणां ग्रामाः च सन्ति । अस्माकं समुद्रतीरस्य प्रयाणं गुजरात्राज्यस्य कच्छप्रदेशतः आरभ्य भवति ।

कच्छप्रदेशस्य उत्तरभागे पूर्वभागे च लवणमयं निर्मलं च *'राण् आफ् कच्छ्'* नामकम् एकं मरुस्थलम् अस्ति ।

शैत्यकाले बहुदूरतः पक्षिणः आगत्य अत्र तिष्ठन्ति इति कारणतः पक्षिणां कलरव-ध्वनिना अत्रत्यं वातावरणं कोलाहलयुतं भवति । मध्य-एषियाभागस्य केषुचित् प्रान्तेषु तदा शैत्यम् अत्यधिकं भवति । तत्रत्यं शैत्यं सोढुम् अशक्नुवन्तः पक्षिणः अत्र आगच्छन्ति । अस्माकं देशे राण्प्रदेशे केवलं फ्लेमिङ्गोपक्षिणः अण्डानि स्थापयित्वा शावकान् वर्धयन्ति ।





*वन्यगर्दभः*

अस्मिन् प्रदेशे विशिष्टाः रक्त-मिश्रितश्वेतवर्णाः '***घोडखर्***'गर्दभाः सन्ति । एतेषां गर्दभानां वैशिष्ट्यं नाम सर्वविधम् अपि वातावरणं सोढुं शक्नुवन्ति एते गर्दभाः । शरीरे जलांशं बहुकालं यावत् रक्षितुम् अपि शक्नुवन्ति एते । एतेषां गर्दभानां रक्षणार्थं १९७३तमे वर्षे अत्र ४८४० कि. मी. विस्तीर्णप्रदेशे 'धङ्गाद्रा'-अभयारण्यं निर्मितम् । प्रशान्तः निर्जनः एषः प्रदेशः १९६५ तमे वर्षे प्रचलिते भारत-पाकिस्थान्युद्धे सैनिकानां कार्याचरणस्य प्रमुखं केन्द्रम् आसीत् ।

कच्छ्समुद्रतीरप्रदेशे माण्ड्वी, मन्द्रा, जखान्, लखपत्, कोटीश्वर्, काण्ड्ला इत्यादिनौकास्थानानि सन्ति । एतेषु माण्ड्वीनौकास्थानम् अत्यन्तं प्रमुखं प्राचीनं च । अत्र मलबार्प्रदेशतः एला, मरीचं, धान्यानि, शुण्ठी इत्यादिकम् आनाय्य नौकाद्वारा मस्कत्, आफ्रिका इत्यादिस्थानानि प्रति प्रेषयन्ति स्म । ततः खर्जूरं, तूलं, वस्त्रणि, शर्करा, तैलं, खड्गमृगचर्म इत्यादीनाम् आनयनं भवति स्म । माण्ड्वी आयातनिर्यातयोः प्रमुखं स्थानम् आसीत् ।

नौकाः यदा तीरं प्राप्नुवन्ति, तदा माण्ड्वीप्रदेशस्य वणिजः उत्साहेन दीपगृहस्य समीपे विद्यमानस्य वप्रस्य उपरि स्थित्वा 'कस्य नौका प्रथमं तीरं प्राप्स्यति' इति स्पर्धां कुर्वन्ति स्म ।

यद्यपि अन्यानि नौकास्थानानि प्रसिद्धानि, तथापि तेषु भारतदेशस्य वायव्यदिशि स्थितं काण्ड्लानौकास्थानं समुद्रद्वारम् इति प्रसिद्धम् अस्ति ।

एतत् निसर्गनिर्मितं नौकास्थानम् । १९५५ तमे वर्षे अत्र निर्माणकार्यम् आरब्धम् । एतदर्थं कच्छ्महाराजेन तृतीयमहारावल्-खेङ्गर्जीमहोदयेन निरन्तरं परिश्रमः कृतः । एतत् अस्माकं देशस्य प्रथमं





स्वेच्छा-वाणिज्यकेन्द्रम् । काण्ड्ला-समीपे आसियाभूखण्डे एव प्रसिद्धाः लवणोद्यमाः सन्ति । पश्चिमदिशि द्वारका अस्ति । श्रीकृष्णेन यादवानां कृते निर्मिता आसीत् एषा नगरी । द्वारकानगरी समुद्रे विलीना अस्ति इति केचन वदन्ति । "एतस्याः नगर्याः निर्माणार्थं समुद्रराजेन द्वादश-योजनविस्तीर्णपरिमितः भूप्रदेशः

*द्वारकादेवालयः*



कृष्णाय दत्तः आसीत् । कृष्णस्य अवसानानन्तरम् एषः भूप्रदेशः पुनश्च समुद्रेन प्रतिस्वीकृतः" इति काचित् पुराणकथा श्रूयते ।

"समुद्रतीरे किञ्चित् नगरम् आसीत् इति प्रतिपादयितुं साक्षिरूपेण काश्चन शिलाः तत्र प्राप्ताः सन्ति" इति समुद्र-प्राच्योत्खननशाखया एषु दिनेषु घोषितम् अस्ति ।

महात्मगान्धिवर्यस्य जन्मस्थलं पोरबन्दर्नगरं सोमनाथमार्गे अस्ति । "सुधाशिलानां नगरम्" इति पोरबन्दर् प्रसिद्धम् अस्ति । अत्रत्ये कीर्तिमन्दिरे गान्धिवर्यस्य जन्म यत्र अभवत् सः प्रकोष्ठः,

प्रार्थनामन्दिरं, सूत्रवयनस्य प्रकोष्ठः, ७९ पादपरिमितम् उन्नतं स्मारकम्, गान्धिवर्यस्य वैशिष्ट्यस्य सिद्धान्तानां च बोधकानि फलकानि च सन्ति ।

मित्रस्य सुदाम्नः कृते कृष्णेन निर्मिता सुदामनगरी एव इदानीन्तनं पोरबन्दर् इति केचन वदन्ति ।

प्रभासक्षेत्रे अरेबिया-समुद्रस्य अभिमुखं सोमनाथदेवालयः दृश्यते । अत्र द्वादशज्योतिर्लिङ्गेषु अन्यतमं पवित्रं ज्योतिर्लिङ्गम् अस्ति ।

क्रिस्ताब्दस्य प्रथमे शतके एतस्य देवालयस्य निर्माणम्



*सोमनाथदेवालयः*

अभवत् । विविधराज्यानां राजभिः अर्पितैः उपायनैः देवालयः शोभायमानः आसीत् । अस्माकं देशे एव अत्यन्तं पवित्रः देवालयः इति प्रख्यातः आसीत् सोमनाथदेवालयः । देवालये ये दीपाः ज्वाल्यन्ते तेषाम् अलङ्करणमपि वज्रैः, आभूषणैः, माणिक्यैः च क्रियते स्म । घण्टानादार्थम् उपयुज्यमाना शृङ्खला अपि सुवर्णेन निर्मिता भवति स्म । अत्रत्या सम्पत् एव देवालयस्य अवनतेः कारणम् अभवत् । गजनी मोहम्मदः बहुवारम् आक्रमणं कृत्वा अत्रत्यसम्पदः लुण्ठनं कृतवान् । गजानाम्, अश्वानाम्, उष्ट्राणां च उपरि आरोप्य अत्रत्यानि आभूषणानि नीतवान् । अनन्तरं गुजरातस्य माल्ववंशीयाः राजानः देवालयस्य पुनर्निर्माणं कृतवन्तः । ७ शते वर्षेषु षड्वारं देवालयस्य उपरि आक्रमणं कृत्वा नाशितवन्तः । इदानीं तत्र स्थितं देवालयं १९५१ तमे वर्षे मे मासे निर्मितम् । तदानीन्तनः भारतस्य राष्ट्राध्यक्षः डा।।श्री राजेन्द्रप्रसादवर्यः ज्योतिर्लिङ्गस्य प्रतिष्ठापनं कृतवान् ।



# कूपीपिशाचः

अनसूया नवोढा वधूः । तस्याः पतिः रङ्गनाथः उत्तमः एव । किन्तु पितृव्यातः नितरां भीतः भवति स्म सः । तस्य पितृव्यायाः नाम रुद्रदेवी इति । सा स्वभावेन चण्डी इव एव आसीत् । मातापितृविहीनः रङ्गनाथः तस्याः सर्वविधपीडाः मौनं सहते स्म । यदा अनसूया स्नुषात्वेन गृहम् आगता तदा तया अपि प्रतिदिनं विविधाः पीडाः प्राप्तव्याः अभवन् । अनसूया यद्यपि सर्वाणि कार्याणि समये श्रद्धया समीचीनतया एव करोति स्म, तथापि रुद्रदेवी तस्याः कार्येषु कमपि दोषं पश्यन्ती घोरवचनैः निन्दति स्म, कदाचित् कठोरं दण्डयति स्म च ।

श्वश्र्वाः एतां पीडां सोढुम् अशक्ता अनसूया कदाचित् निर्णीतवती यत् इतःपरम् आत्महत्या एव शरणम् इति । अतः सा ग्रामात् बहिः विद्यमानस्य अश्वत्थवृक्षस्य समीपं गत्वा आत्महत्यां कर्तुम् उद्युक्ता । किन्तु तावता तत्र कश्चन मान्त्रिकः आगतः । सः पिशाचं ग्रहीतुं तत्र आगतः आसीत् । सः अनसूयाम् आत्महत्याप्रयत्नतः निवार्य आत्महत्याकारणं पृष्टवान् ।

तदा अनसूया स्वस्य कष्टपरिस्थितिं विस्तरेण निवेद्य मान्त्रिकं प्रार्थितवती - ''मम मरणार्थं कश्चित् सरलं मार्गम् उपदिशतु'' इति ।

तस्याः वचनं श्रुत्वा मान्त्रिकः हसन् उक्तवान् - ''किं मरणचिन्तनेन ? कष्टकराणि कार्याणि करणीयानि खलु भवत्या ? तदर्थम् एतां कूपीं नयतु भवती । एतस्याः आवरणम् अपनीतं चेत् इतः कश्चन पिशाचः आगमिष्यति । सः महाकष्टकरम् अपि कार्यं लीलया करिष्यति । एवं शतवारं सः पिशाचः

भवत्याः साहाय्यं कर्तुम् अर्हति । शततमस्य साहाय्यस्य अनन्तरं भवत्या तस्य विमोचनं करणीयम्'' इति ।

एतत् अङ्गीकृत्य अनसूया तस्मै कृतज्ञतां समर्प्य कूपीं स्वीकृत्य स्वगृहं प्रतिगतवती । अनन्तरदिने उषसि एव कठोरशब्दैः निन्दन्ती एव उत्थिता रुद्रदेवी - ''अये कुलकलङ्के ! श्वः पर्वदिनम् । किन्तु अद्यापि गृहस्य वर्णलेपनं न सम्पन्नम् । धूलिमार्जनं न जातम् । रङ्गवल्ली इतोऽपि न लिखिता । किम् एतत् ! धिक् भवतीम्'' इति तर्जनवर्षणम् एव आरब्धवती ।

श्वश्र्वाः तर्जनं श्रुतवत्याः अनसूयायाः दुःखम् उद्गतम् । पर्वदिने तस्याः मातापित्रोः आगमनं निश्चितम् आसीत् । तयोः निमित्तं मधुरखाद्यानि करणीयानि इति तस्याः सङ्कल्पः आसीत् । यदि स्वच्छता-वर्णलेपनादिकं करणीयं तर्हि खाद्य-सज्जीकरणार्थं कथं वा समयः प्राप्येत ?

अत्रान्तरे अनसूयया कूपीपिशाचः स्मृतः । सा कूप्याः आवरणम् अपनीतवती । तदा कूपीतः पिशाचः बहिः आगतः । अनसूया तं स्वकष्टं निवेदितवती । पिशाचस्तु अनसूयां सान्त्वनवचनानि उक्त्वा न केवलं रुद्रदेव्या सूचितानि सर्वाणि कार्याणि कृतवान्, अपि तु मधुरभक्ष्यादिकम् अपि अल्पे एव काले सज्जीकृतवान् । कुत्रापि गता रुद्रदेवी यावत् प्रत्यागता तावत् गृहं दर्पणः इव स्वच्छं जातम् आसीत् । रमणीयेन वर्णेन शोभते स्म अपि । पाकशालातः मधुरखाद्यानां गन्धः निर्गच्छति स्म । ततः सा पाकशालां



गत्वा आतृप्ति भोजनं कृतवती । अनसूया अद्य सर्वाणि कार्याणि कथं समापयितुं शक्ता इति न ज्ञातवती एव सा ।

अनन्तरदिने अनसूयायाः मातापितरौ आगतौ । रुद्रदेवी तौ आदरेण सत्कृतवती । तयोः पुरतः अनसूयां श्लाघितवती च । 'स्वपुत्री सुखेन अस्ति' इति भावयन्तौ अनसूयायाः मातापितरौ सन्तोषेण ततः निर्गतौ ।

तयोः निर्गमनसमनन्तरम् एव रुद्रदेव्याः वास्तविकं स्वरूपं प्रकटितम् अभवत् । सा स्नुषायाः आलस्यं निन्दन्ती वस्त्रराशिम् एव आनीय अनसूयायाः पुरतः स्थापयित्वा - ''इदानीम् एव एतानि भवत्या क्षालनीयानि । भवत्याः मातापितरौ समग्रं गृहं मलिनीकृतवन्तौ । अतः सर्वत्र सम्मार्जनं कृत्वा वस्त्रमार्जनम् अपि करणीयम् । सर्वप्रथमम् अट्टे स्थितानि महापात्राणि अधः आनीय तेषु सर्वेषु जलं पूरणीयम्'' इति आज्ञापितवती । एतादृशानि अन्यानि अपि कानिचन कार्याणि आदिश्य जल्पनार्थं पार्श्वगृहं गतवती सा ।

तस्याः प्रत्यागमनात् पूर्वम् एव अनसूया पिशाचस्य साहाय्येन तया सूचितानि सर्वाणि कार्याणि समापितवती आसीत् । एतत् दृष्ट्वा रुद्रदेवी आश्चर्यचकिता अभवत् । 'स्नुषा विना कार्यं न तिष्ठेत्' इति अपेक्षा तस्याः । अतः सा स्नुषां पुनः आदिष्टवती - ''कूपस्य जलं लवणमयम् । तेन एव जलेन क्षालितवती भवती । अतः नदीं गत्वा एतानि पुनः क्षालनीयानि ।





सकृत् सर्वाणि नेतुं न शक्यन्ते चेत् द्वित्रवारं गमनागमनं करणीयम् । गमनागमनं धावनपूर्वकम् एव भवेत्'' इति ।

एतत् श्रुत्वा अनसूया शान्तस्वरेण पृष्टवती - ''मम सखी सरस्वती वदति यत् नदीतीरे प्रसारितानि वस्त्राणि क्षणमात्रेण शुष्कीभवन्ति इति । अतः क्षालितानि वस्त्राणि नदीतीरे एव शोषणीयानि उत शोषणार्थम् अत्र आनेतव्यानि ?'' इति ।

''हुँ, नदीतीरे एव तानि शोषयतु । भवती कथं कार्यं करोति इति परिशीलयितुम् अहं तत्र आगमिष्यामि'' इति उक्त्वा ततः निर्गतवती रुद्रदेवी ।

अनसूया नदीतीरं गतवती । पिशाचः वस्त्राणि प्राक्षालयत् । स्तम्भानां निखननं कृत्वा रज्जुं बद्ध्वा वस्त्राणि शोषणार्थं प्रासारयत् । सर्वाणि कार्याणि अल्पे एव काले समाप्तानि ।

रुद्रदेवी किञ्चित्कालानन्तरं तत्र आगतवती । वस्त्राणि सर्वाणि शोषणार्थं प्रसारितानि आसन् । एतत् दृष्ट्वा आश्चर्यं सन्तोषं च अनुभवन्ती अपि सा स्व-भावं न प्रकटीकृतवती । अनन्तरदिनेषु रुद्रदेवी अनसूयाद्वारा कष्टसाध्यानि बहूनि कार्याणि कारितवती । स्वयं तु सुखेन दिनानि यापितवती ।

ततः मासद्वयाभ्यन्तरे १८ वारं पिशाचः कूपीतः बहिः आगत्य अनसूयायाः साहाय्यं कृतवान् आसीत् । 'इतःपरं द्विवारम् एव पिशाचः साहाय्यं कर्तुम् अर्हति । अनन्तरकाले मया यथापूर्वं क्लेशाः अनुभोक्तव्याः' इति चिन्तयन्ती अनसूया कदाचित् प्रकोष्ठे उपविष्टवती आसीत् ।

अत्रान्तरे तत्र आगता रुद्रदेवी तूष्णीम् उपविष्टवतीम् अनसूयां दृष्ट्वा क्रोधेन - ''किम् एतत् ! राजकुमारी इव सुखेन उपविष्टा अस्ति खलु भवती ? कूपजलं लवणमयम् अस्ति । अतः पानजलम् आनेतुं नदी गन्तव्या भवति । तदर्थं भवती कूपस्थं लवणजलम् अपनीय कूपं मधुरजलेन पूरयतु'' इति आदिष्टवती ।

रुद्रदेव्याः निर्गमनानन्तरम् अनसूया कूपीस्थं पिशाचम् आहूय रुद्रदेव्या सूचितं कार्यं निवेदितवती ।

तदा पिशाचः असन्तोषेण अवदत् -

"भवत्याः निमित्तं मया असाध्यानि अपि कार्याणि कृतानि । भवती चिन्तितवती स्यात् - सर्वं क्षणमात्रेण मया निरायासं क्रियते इति । किन्तु एतादृशकार्यार्थं भवती यावन्तं श्रमं वहेत् तावान् श्रमः मया अपि वोढव्यः एव । तथापि मयि करुणा नास्ति भवत्याः । प्रतिदिनम् अपि कठिनातिकठिनं कार्यम् एव आदिशति भवती" इति ।

"किं करोमि मित्र ? अहम् असहाया अस्मि । वराक्याः मम श्वश्वाः कारणतः मया एतादृशानि कार्याणि उच्यन्ते" इति उक्तवती अनसूया ।

"इदानीं मया यत् क्रियते तत् नवनवतितमं (९९) कार्यम् । तदनन्तरम् एकमेव कार्यं भवत्याः निमित्तं करिष्यामि । मम अनुपस्थितौ भवती किं करिष्यति ?" इति पृष्टवान् पिशाचः ।

"किम् अन्यत् कर्तुं शक्नुयाम् ? पुनरपि आत्महत्यार्थं प्रयत्नं करिष्यामि" इति खेदेन उक्तवती अनसूया ।

पिशाचः क्षणकालम् आलोच्य - "भोः, तर्हि एवं करवाव । पूर्वजन्मनि मम पुत्रः उत्तमः आसीत् । तस्य पत्नी मया बहुधा पीडिता । तस्य फलरूपेण इदानीं पिशाचजन्म प्राप्य भवत्याः सेवां कुर्वती अस्मि । भवत्याः श्वश्रूः अपि भवतीं बहु पीडयति खलु ? अग्रिमसन्दर्भे सा भवतीं कार्यं यदा वदिष्यति तदा भवती माम् आह्वयतु । अहं प्रत्यक्षीभूय तां मारयित्वा कूप्यां पूरयित्वा इतः निर्गमिष्यामि । ततः पिशाचत्वं प्राप्तवती सा भवत्याः दासी भविष्यति" इति उक्त्वा कूपं रिक्तीकृत्य मधुरजलेन पूरयित्वा च कूपीं प्राविशत् ।

'अनसूया किं कुर्वती अस्ति' इति द्रष्टुम् आगता रुद्रदेवी एतत् सम्भाषणं श्रुतवती आसीत् । अग्रे किं भविष्यति इति ज्ञातवती सा तदनन्तरकाले अनसूयां कठिनकार्यं किमपि न उक्तवती एव, प्रत्युत महत् प्रेम प्रदर्शितवती । पिशाचेन तु शततमं कार्यं कर्तुम् अवकाशः एव न प्राप्तः इत्यतः सः कूपीवासात् मुक्तिं प्राप्तुं न शक्तवान् एव ।





# शुकज्योतिषम्

अवन्तीदेशस्य महाराजः स्वपुत्र्याः वनमालायाः विवाहार्थं सर्वेभ्यः देशेभ्यः आह्वानपत्रिकां प्रेषितवान् । अवन्तीदेशस्य पार्श्वे एव वैशालीनगरम् आसीत् । तस्य राज्यस्य महाराजः सञ्जयवर्मा । सः वनमालायाः सौन्दर्यविषयं श्रुतवान् आसीत् । अतः सः तस्याः परिणये उत्सुकः आसीत् अपि ।

'राजकुमारी दर्शनमात्रेण मां परिणेष्यति' इति दृढः विश्वासः आसीत् सञ्जयवर्मणः । अतः सः उत्साहेन एव स्वयंवरदिने अवन्तीदेशं प्रति गतवान् । परन्तु स्वयंवरसमयः इतोऽपि आसन्नः न आसीत् । 'शीघ्रं राजसभां प्रविशामि चेत् औचित्यं न भवेत्' इति विचिन्त्य सः अतिथिगृहे किञ्चित्कालं विश्रान्तिं स्वीकृतवान् । अनन्तरं वीथ्यां विद्यमानाः विचित्रविशेषताः द्रष्टुं विशेषवार्ताः ज्ञातुं च ततः प्रस्थितवान् ।

सञ्जयवर्मा विविधानां भवनानां सौन्दर्यं पश्यन् एकस्यां वीथ्यां गच्छन् आसीत् । तत्र सः एकस्य मन्दिरस्य पुरतः एकं फलकं दृष्टवान् । तत्र लिखितम् आसीत् - 'शुकज्योतिषम् । सुवर्ण–नाणकमात्रं शुल्कम्' इति ।

'एतस्य शुकज्योतिषस्य विशेषता का इति ज्ञातव्यम्' इति कुतूहलम् उत्पन्नं सञ्जयवर्मणः मनसि । अतः सः एकं सुवर्णनाणकं दत्त्वा मन्दिरस्य अन्तः गतवान् ।

तत्र एकस्मिन् पञ्जरे कश्चन शुकः आसीत् । सः सम्भाषणसमर्थः अपि आसीत् । सः शुकः सञ्जयवर्माणं दृष्ट्वा - ''वैशालीनगरस्य राजकुमाराय स्वागतम् । अस्माकं राजकुमार्याः वनमालायाः स्वयंवरार्थम् आगतः भवान् अस्माकं

प्रियः । भवतः शुभं भवतु'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा सञ्जयवर्मा आश्चर्यचकितः अभवत् । 'मम विषयं कथम् एषः ज्ञातवान्' इति सञ्जयवर्मा न अवगतवान् ।

'मम वेषभूषणादिकं दृष्ट्वा शुकः माम् अभिज्ञातवान् स्यात्' इति चिन्तयित्वा सञ्जयवर्मा वेषान्तरं धृत्वा आगन्तुम् इच्छन् अतिथिगृहं प्रत्यागतवान् । तत्र राजवस्त्राणि अपनीय सामान्यवस्त्राणि धृत्वा पुनः शुकस्य मन्दिरं गतवान् । पुनरपि धनं दत्त्वा भवनं प्रविष्टवान् च ।

शुकः तं दृष्ट्वा - ''वैशालीनगरस्य महाराजाय पुनः स्वागतम् । अस्माकं राजकुमार्याः वनमालायाः स्वयंवरार्थम् आगतः भवान् अस्माकं प्रियः अस्ति । भवतः शुभं भवतु'' इति उक्तवान् ।

एतत् श्रुतवतः सञ्जयवर्मणः अतीव आश्चर्यम् अभवत् । 'पूर्वं शुकः राजवेषेण माम् अभिज्ञातवान् स्यात् इति मया चिन्तितम् आसीत् । किन्तु इदानीं सामान्यवेषेण अहं स्थितः अस्मि । तथापि एषः शुकः माम् अभिज्ञातवान् अस्ति । एतत् कथम्?' इति प्रश्नः उद्भूतः सञ्जयवर्मणः मनसि ।

सः किञ्चित्कालं चिन्तयित्वा किमपि ज्ञातवान् इव शिरः चालयन् मन्दिरतः बहिः आगतवान् । मार्गे एकत्र क्षौरापणं गत्वा मुण्डनं कारयित्वा समीपे एव विद्यमानम् आपणं गतवान् ।

तस्मिन् आपणे विविधानि वस्त्राणि



आसन् । तेषु संन्यासिनां वस्त्राणि सञ्जयवर्मणः इष्टाय जातानि । परन्तु 'एतादृशवस्त्रधारिणः सामान्यतः ज्योतिषे कुतूहलिनः न भवन्ति' इति विचिन्त्य सः संन्यासिवेषधारणविचारं परित्यक्तवान् । आपणे अन्यविधवेषाः अपि आसन् । किन्तु तेषां धरणे सञ्जयवर्मणः इच्छा न उत्पन्ना । विविधानां वस्त्राणां परिशीलनस्य अनन्तरं पुरोहितवेषे तस्य दृष्टिः पतिता । सः तं वेषं क्रीत्वा अतिथिगृहं प्रत्यागतवान् ।

पुरोहितवस्त्राणि कथं धरणीयानि इति सञ्जयवर्मा न जानाति स्म । अतः सः तस्य वेषस्य धारणे किञ्चित् कष्टम् अनुभूतवान् । अन्ते कथञ्चित् वेष्टीं धृत्वा, ललाटे भस्म धृत्वा, स्कन्धे उत्तरीयं संस्थाप्य शुकमन्दिरं गतवान् सः । पुनरपि धनं दत्त्वा अन्तः गतवान् च ।

शुकः तं दृष्ट्वा अनुक्षणम् अवदत् - ''वैशालीनगरस्य महाराजस्य आगमनाय धन्यवादाः । भवान् अस्माकं राजकुमार्याः स्वयंवरार्थं बहुदूरतः आगतः अस्ति । परन्तु स्वयंवरस्य समयः अतीतः । अस्माकं राजकुमारी देवगिरिराजकुमारम् ऊढवती । करणीयं कार्यमपि विस्मृत्य भवान् व्यर्थकुतूहलेन पुनः पुनः मम समीपम् आगत्य कालहरणं कृतवान् । लब्धम् अवकाशं नाशितवान् । एवं कृतवत्सु भवान् षष्ठः । भवादृशानां विषये मम हृत्पूर्वकसहानुभूतिः अस्ति । भवान् मम ज्योतिषनिमित्तं त्रिवारम् आगतवान् । अतः भवते विशेषधन्यवादाः'' इति ।

एतानि वचनानि श्रुत्वा आत्मना कृतं दोषं ज्ञातवान् सञ्जयवर्मा । 'स्वराज्यस्य सर्वाणि कार्याणि विहाय अहम् अत्र आगतवान् । किन्तु अत्र राजकुमार्याः विवाहविषयं परित्यज्य शुकस्य ज्योतिषस्य परीक्षां कुर्वन् अहं व्यर्थं कालयापनं कृतवान् । यदि अन्ये मम एतां मूर्खतां जानन्ति, तर्हि ते निश्चयेन माम् उपहसेयुः' इति चिन्तयित्वा सः ततः मौनं स्वराज्यं प्रति गतवान् ।





# महाभारतम्

दक्षिणसमुद्रप्रान्तस्य समीपं सौभद्रः नाम कश्चन तटाकः अस्ति । अर्जुनः यदा तत्र स्नानार्थं गतवान्, तदा तत्रत्याः ब्राह्मणाः तं निरुध्य उक्तवन्तः - "एतेन सौभद्रतटाकेन सह पालोमः, कारण्डवः, प्रसन्नः, भारद्वाजः इति तटाकाः सन्ति । एतेषु पञ्चसु तटाकेषु गतेषु शतवर्षेषु कोऽपि स्नानं न कृतवान् । नाममात्रेण ते तटाकाः सन्ति । तेषु मकराः सन्ति । अतः तेषु पादस्थापनम् अपायकरम्" इति ।

एतं विषयं जानन् अपि अर्जुनः - 'मकरेभ्यः भीतः सन् यदि स्नानं न करोमि तर्हि तत् पुरुषलक्षणं न । एतावत्पर्यन्तम् एकम् अपि तीर्थम् अविहाय सेवमानः अस्मि । अतः अत्र स्नानं करोमि एव' इति चिन्तयन् तटाके अवतीर्णवान् ।

जलस्य कम्पनकारणतः तटाके विद्यमानः कश्चन मकरः वेगेन आगत्य अर्जुनस्य पादं गृहीतवान् । तदा अर्जुनः तं तटपर्यन्तम् आकृष्य आनीतवान् । तत्क्षणमेव तस्य मकरस्वरूपम् अदृश्यं जातम् । सः मकरः स्त्रीरूपं प्राप्तवान् । तस्य परिवर्तनं दृष्ट्वा तत्रत्याः ब्राह्मणाः, अर्जुनः च दिग्भ्रान्ताः अभवन् ।

अनन्तरम् अर्जुनः आश्चर्येण तां पृष्टवान् - "भवती का ? केन कारणेन भवती एतत् रूपं धृत्वा तटाके अस्ति ? कथं भवत्याः रूपपरिवर्तनं जातम् ?" इति ।

तदा सा उक्तवती - "अहं काचित्

१६. "द्वारकायाम् अर्जुनः"

अप्सराः । मम नाम वर्गा । शापस्य कारणतः सौरभेयी, समीचिः, पसा, लता चेति मम चतस्त्रः सख्यः अहम् इव मकररूपं धृतवत्यः । ताः अपि समीपस्थेषु तीरेषु सन्ति । यथा भवत्तः मम शाप-विमोचनम् अभवत् तथा तासाम् अपि भवतु'' इति ।

''आर्ये, आश्चर्यकरम् अस्ति भवतीनां कथा । एतादृशः भयङ्करः शापः भवतीभिः कथम् प्राप्तः ?'' इति अर्जुनः तां पृष्टवान् ।

तदा वर्गा आत्मनः कथाम् उक्तवती - ''वयं पञ्च जनाः अपि दिक्पालकानां नगरं पश्यन्त्यः भूलोकम् आगच्छन्त्यः आस्म । तदा कस्मिंश्चित् वने वयं तपः कुर्वन्तं कञ्चित् ब्राह्मणं दृष्टवत्यः । सः तेजोमयः सुन्दरः च आसीत् । तस्य तपोभङ्गः करणीयः इति दुर्भावना अस्मासु उत्पन्ना । तस्य पुरतः वयम् उद्रेककरं वचनम् उक्तवत्यः । विविधानि नृत्यानि कृतवत्यः । परन्तु सः विचलितः न जातः । तृणवत् अस्मान् दृष्टवान् । अन्ते अस्माकं कारणेन तस्य क्रोधः आगतः । अतः सः शापं दत्तवान् यत् भवत्यः मकराः भवन्तु इति । अनुक्षणमेव वयं तस्य पादौ गृहीत्वा - 'शापस्य अपेक्षया मरणमेव वरम् । कृपया दयां प्रदर्शयतु' इति प्रार्थितवत्यः । शतवर्षपर्यन्तं भवतीभिः मकरजीवनं करणीयम् एव । अनन्तरं कोऽपि भवतीः गृहीत्वा तटम् आनेष्यति चेत् शापविमोचनं भविष्यति' इति सः ब्राह्मणः उक्तवान् । तदा आरभ्य वयं मकराः स्मः । अतः अहं



भवन्तं निवेदयामि यत् भवान् अवशिष्टेषु चतुर्षु तटाकेषु विद्यमानाः मम सखीः अपि तटम् आनयतु । तटाकान् पवित्रीकरोतु इति'' इति ।

तस्याः प्रार्थनानुसारं चतुर्षु तटाकेषु अवतीर्य अर्जुनः तत्रत्यानाम् अप्सरसां शापविमोचनं कृतवान् । तदनन्तरं तेषां पञ्चतटाकानां नाम 'नारीतटाकाः' इति परिवर्तितम् अभवत् ।

अर्जुनः ततः मणिपुरं प्रत्यागत्य चित्राङ्गदया सह गार्हस्थ्यजीवनम् आरब्धवान् । अनन्तरकाले चित्राङ्गदायाः बभ्रुवाहनः नाम पुत्रः जातः । 'वंशोद्धारकः भवतु भवान्' इति पुत्रम् आशिषा अनुगृह्य तं पितुः समीपं प्रेषितवती चित्राङ्गदा ।



अर्जुनः ततः समीपे विद्यमानं प्रभासतटाकं गत्वा स्नानं कृत्वा तत्रैव वटवृक्षस्य अधः शयनं कृतवान् । तत्र अर्जुनस्य गदनामकस्य यादवस्य परिचयः अभवत् । सः कृष्णस्य अनुजायाः सुभद्रायाः सौन्दर्यविषयम् अर्जुनं विस्तरेण उक्तवान् ।

अर्जुनः अपि श्रुतवान् आसीत् यत् सुभद्रा मेनकायाः अपेक्षया अपि अधिक-सौन्दर्यवती इति । 'सुभद्रा द्रष्टव्या, तस्याः प्रीतिः सम्पादनीया' इति अर्जुनः चिन्तितवान् ।

प्रभासतटाकतः अनतिदूरे द्वारका अस्ति । तत्र कृष्णः वसति स्म । संन्यासिनां विषये यादवानां महती भक्तिः । अतः अर्जुनः निर्णीतवान् यत् संन्यासिवेषं धृत्वा द्वारकां प्रति गन्तव्यम् इति ।

तावति काले 'अर्जुनः तीर्थयात्रां कुर्वन् प्रभासतटाकम् आगतवान् अस्ति' इति वार्तां गुप्तचराणां द्वारा कृष्णः ज्ञातवान् आसीत् । सः अर्जुनस्य समीपम् आगत्य- ''किमिदम् अर्जुन ? कः एषः वेषः भवतः ? किमर्थं भवान् वेषं परिवर्तितवान् ?'' इति पृष्टवान् ।

तदा अर्जुनः आत्मनः मनोभिलाषां कृष्णं सूचितवान् । कृष्णः अर्जुनस्य प्रस्तावम् अङ्गीकृत्य - ''भवान् रैवताद्रेः समीपे भवतु'' इति उक्त्वा तम् आत्मना सह नीतवान् । तत्र सुखभोजनेन नृत्य-गायनेन च द्वौ अपि सन्तोषेण कालं



यापितवन्तौ । अनन्तरदिने प्रातः अर्जुनस्य वासादिनिमित्तं सर्वविधव्यवस्थां कृत्वा कृष्णः द्वारकां गतवान् ।

अनन्तरं केषुचित् दिनेषु एव रैवताद्रेः उपरि महान् उत्सवः सञ्जातः । तम् उत्सवं द्रष्टुं द्वारकातः वसुदेवः, उग्रसेनः, अक्रूरः, बलरामः, कृष्णः, प्रद्युम्नः इत्यादयः यादवाः, देवकी, रेवती, रुक्मिणी, सत्यभामा, जाम्बवती इत्यादयः स्त्रियः, सुभद्रा इत्यादयः कन्याः च आगताः । एतेषां मध्ये विद्यमानां सुभद्रां दृष्ट्वा अर्जुनः सन्तुष्टः । उत्सवं समाप्य सर्वेऽपि द्वारकां गतवन्तः ।

कृष्णस्य वचनानुसारम् अर्जुनः रैवताद्रिं त्यक्त्वा द्वारकायाः पार्श्वे विद्यमानं वृन्दावनं गतवान् । तत्र आगताः बलरामादयः यादवाः अर्जुनं दृष्ट्वा तस्य कपट-संन्यासित्वम् अज्ञात्वा तं नमस्कृतवन्तः । "भवान् किं किं पुण्यस्थलं दृष्टवान् ? अत्र भवान् कति दिनानि स्थास्यति ?" इति पृष्टवन्तः ते ।

अर्जुनः तान् उक्तवान् - "चतुरः मासान् यावत् अत्रैव स्थास्यामि । तन्नाम आशाढ-शुक्लपक्षतः कार्तिकशुक्लपक्षपर्यन्तम् अत्रैव मम वासः" इति ।

एतत् वचनं श्रुत्वा बलरामस्य महान् सन्तोषः जातः । सः कृष्णं पृष्टवान् - "एतस्मै संन्यासिने सुभद्रायाः अन्तःपुरस्य पार्श्वे लतागृहे एव कुत्रचित् कुटीरं निर्माय दद्मः । एतत् अनुमतं खलु भवतः?" इति ।

"एषः संन्यासी सुन्दरः अस्ति । सुभद्रा अपि सुन्दरी अस्ति । अग्रे किमपि भविष्यति चेत् का गतिः इति भयं मम" इति कृष्णः संशयं प्रकटितवान् ।

"तथा सर्वान् संशयदृष्ट्या मा पश्यतु । एतत् उचितं न । परन्तु तस्मै कुटीरं मास्तु । सुभद्रायाः अन्तःपुरे विद्यमानम् एकं मन्दिरं दद्मः" इति बलरामः उक्तवान् । कृष्णः अग्रजस्य वचनं तिरस्कर्तुम् अशक्नुवन् इव व्यवहृतवान् । अनन्तरम् अर्जुनं सुभद्रायाः अन्तःपुरं सम्प्रेष्य सः रहसि रुक्मिणीं सत्यभामां च वास्तविकं विषयम् आद्यन्तं निवेदितवान् ।

एतदनन्तरं सः सुभद्राम् उक्तवान् -



''सहोदरि! संन्यासी भवत्याः अन्तःपुरे अस्ति । भवती, भवत्याः सख्यः च तस्य वचनानुसारं सर्वां व्यवस्थां कुर्युः । तस्य स्नानभोजनादिविषये अजागरूकता मास्तु । संन्यासिनः सेवां कृत्वा बह्व्यः कन्याः सत्फलं प्राप्तवत्यः सन्ति'' इति ।

कृष्णस्य आदेशं पालयन्ती सुभद्रा अर्जुनस्य किञ्चिदपि कष्टं यथा न भवेत्, तथा सेवां कुर्वती आसीत् । सुभद्रायाः सौन्दर्यं दृष्टवतः अर्जुनस्य परमानन्दः जातः। तस्य तीर्थयात्रायाः समयः अतीतः । परन्तु इन्द्रप्रस्थं प्रति गमनविषये चिन्तनमेव न आसीत् तस्य ।

अर्जुनस्य यादृशी स्थितिः आसीत् तादृशी एव स्थितिः आसीत् सुभद्रायाः अपि । सा सदा अर्जुनमेव ध्यायति स्म । अर्जुनस्य विषये यथा तस्याः उत्तमा भावना भवेत् तथा व्यवस्थां कृतवान् आसीत् गदः । कृष्णः अपि जनानां पुरतः अर्जुनं बहुधा प्रशंसति स्म । 'अर्जुनः इव भवान् धनुर्विद्यापारङ्गतः भवतु' इति यादवाः स्वपुत्राणाम् आशीर्वादं कुर्वन्ति स्म । एतत् सर्वं सुभद्रा अपि शृणोति स्म । एतादृशानां श्रवणतः अर्जुनविषयकः तस्याः अनुरागः दिने दिने वर्धते स्म । यदि यः कोऽपि इन्द्रप्रस्थतः आगच्छति, तर्हि तम् अर्जुनस्य विचारं बहुधा पृच्छति स्म सा । अर्जुनस्य विविधाः लीलाः श्रुत्वा महान्तम् आनन्दम् अनुभवति स्म च ।

एकदा अर्जुनः एकाकी यदा आसीत् तदा तस्य सेवां समाप्य सुभद्रा पृष्टवती - ''भवान् कति देशान् दृष्टवान् ? भवान् इन्दप्रस्थं जानाति वा ? मम मातुलानी कुन्तीदेवी कुशलिनी किम् ? धर्मराजादयः कथं सन्ति ? विशालनेत्रं दीर्घबाहुम् अर्जुनं दृष्टवान् वा भवान् ? सः महाशूरः अतुलपराक्रमशाली इत्येतत् सत्यं खलु !'' इति ।

तदा अर्जुनः - ''इन्द्रप्रस्थे कुन्ती, पाण्डवाः, द्रौपदी च सुखिनः सन्ति । परन्तु यथा ते न जानीयुः तथा अर्जुनः संन्यासिवेषं धृत्वा द्वारकायां सुभद्रायाः पुरतः उपविष्टवान् अस्ति । अहमेव सः अर्जुनः । मयि भवत्याः यावान् अनुरागः अस्ति, ततोऽपि द्विगुणितः अनुरागः

भवत्यां मम अस्ति । एकस्मिन् शुभे दिने भवती परिणेतव्या, जीवनस्य सार्थक्यं सम्पादनीयं च इति मम सङ्कल्पः'' इति ।

तदा सुभद्रा लज्जिता अभवत् । सा शिरः अवनमय्य स्थितवती । अर्जुनः तां लतागृहं नीतवान् ।

तयोः परिस्थितिम् अवगत्य कृष्णः अर्जुनस्य सेवार्थं रुक्मिणीं नियोजितवान् । अर्जुनम् एव सदा ध्यायन्ती विरहतापतप्ता सुभद्रा अन्नाहारादिषु अपि अनासक्ता जाता ।

देवकीदेवी स्वपुत्र्याः अस्वास्थ्यं ज्ञातवती । ''भवती किमर्थं चिन्तयति ? भवत्याः इच्छाम् आर्यपुत्रं वदिष्यामि । भवत्याः मनोभिलाषां पूरयिष्यामि'' इति सा वचनं दत्तवती ।

ततः देवकी एतं विचारं वसुदेवम् उक्तवती । सः एतं विषयम् उग्रसेनम् अक्रूरप्रभृतीन् कांश्चन हितैषिणः च उक्तवान् । कृष्णस्य अनुमतिं स्वीकृत्य, बलरामः यथा न जानीयात् तथा दशदिनानन्तरं सुभद्रार्जुनयोः विवाहं निश्चितवान् वसुदेवः । ततः उद्घोषणं कारितं यत् अन्तर्द्वीपे दश-दिनानि उत्सवः आचरणीयः इति ।

सः अन्तर्द्वीपः दशयोजनविशालः आसीत् । एतस्य उत्सवस्य निमित्तं द्वारकातः आबालगोपालाः बहवः द्वीपं प्रति प्रस्थिताः ।

स्वविवाहसन्दर्भे कृष्णः समीपे भवेत् इति आशयेन अर्जुनः सुभद्राम् उक्तवान् - ''भवती कृष्णं निवेदयतु यत् एतत्सन्दर्भे भवता अत्र अवश्यं स्थातव्यम् इति'' इति ।

एतदनुगुणं सा कृष्णम् उक्तवती - ''भ्रातः! भवान् अन्तर्द्वीपं यदि गमिष्यति, तर्हि अत्र संन्यासिसेवायां लोपः भवेत् कदाचित् । अतः भवान् मा गच्छतु कृपया । अत्रैव भवतु'' इति ।

तदा कृष्णः - ''अस्मिन् समये भवत्या एव संन्यासिसेवा करणीया, न अन्येन केनापि'' इति उक्त्वा अन्तर्द्वीपं गतवान् ।



# र स वा र्ताः

## भूमेः वयः ४६ वर्षाणि

वयं यत्र वसन्तः स्मः तस्याः भूमेः वयः ४६ वर्षाणि केवलम् इति वदति प्रपञ्चस्तरे ख्यातः अन्वर् फाजल् । श्रोतुं विचित्रम् इव भाति खलु । तस्य विवरणम् एवम् अस्ति - ''एतस्याः भूमेः



उत्पत्तिः ४६,००० कोटिवर्षेभ्यः पूर्वम् अभवत्' इति शास्त्रज्ञानाम् अभिप्रायः अस्ति । एतत् सुलभतया अभिज्ञातुं ४६ वर्षाणि इति वदति अन्वर् फाजल् ।

सद्यः एव कदाचित् बेङ्गलूरुनगरे भाषमाणः श्री अन्वर् फाजल् - ''भूमेः बाल्यं कदा आसीत् ? यौवनं कदा इत्यादिकं वयं न जानीमः । चतुर्भ्यः वर्षेभ्यः यत् प्रचलत् अस्ति तत् केवलं वयं जानीमः । राक्षसगोधिकाः गतवर्षे एव आसन् । गतसप्ताहे एव भूमिः हिममयं काल-खण्डम् अतिक्रान्तवती अस्ति । घण्टाचतुष्टयात् पूर्वं मानवानां सञ्चारः अत्र आरब्धः । कृषेः आरम्भः एकघण्टायाः पूर्वम् एव अभवत् । औद्योगिकक्रान्तिः एकनिमेषात् पूर्वम् अभवत् । गतनिमेषे ५०० विधानां जन्तूनां विनाशः अभवत्'' इति उक्तवान् । ज्ञातं खलु भवद्भिः, निपुणेन उक्तस्य षट्चत्वारिंशद्वर्षात्मकस्य वयसः रहस्यम् ?

## पुनः विद्यालयं प्रति

आजीवनं विद्याग्रहणम् इति वदन्ति ज्येष्ठाः । तदा तदा विद्यालयं गत्वा पठनीयम् इति एतस्य अर्थः न । किन्तु दक्षिण-अमेरिकाभूखण्डस्य ब्रेजिल्देशस्य कैश्चित् गण्यैः वस्तुतः अपि विद्यालयं प्रति गन्तव्यम् आपतितम् । राष्ट्रनायकेषु अपेक्षिताः राजकीयप्रज्ञा, अनुभवः इत्यादयः न भवन्ति चेत् ते स्वकर्तव्यं सम्यक् निर्वोढुं न शक्नुवन्ति । अतः ब्रेजिल्नायकैः १८० शासकाः सदस्याः च विद्यालयं प्रति प्रेषिताः । तत्र ते राजकीय-सामाजिकार्थिकविषयान् अधिकृत्य शिक्षणं प्राप्तवन्तः । अस्माकं देशे अपि नूतनतया निर्वाचितानां लोकसभाशासकानां कृते लोकसभा-राज्यसभयोः निर्वहणविषये शिक्षण-शिबिराणि, कक्ष्याः च आयोजिताः आसन् इति सर्वैः विदितमेव अस्ति ।

## अध्यापकानाम् अध्यापकः संवृत्तः छात्रः

अमेरिकादेशस्य वैमानिकदलं प्रविष्टः क्याप्टन् स्काट् ओग्रेडी अमेरिका-वैमानिकदलस्य विद्यालये १९९१ तमे वर्षे छात्रः आसीत् । वर्षद्वयात् पूर्वं सः शान्तिसेनायाः सदस्यः सन् बोस्नियादेशं गतवान् आसीत् । सः यत् विमानं चालयन् आसीत् तत् यानं शत्रवः पातितवन्तः । अपरिचिते विचित्रे परिसरे पतितेन तेन बहूनि कष्टानि अनुभूतानि । कथञ्चित् षड्दिनानाम् अनन्तरं सः सुरक्षितप्रदेशं प्राप्तवान् । प्राणरक्षणार्थं तेन कृतान् प्रयत्नान्, अनुसृतानि तन्त्राणि च ज्ञातुम् इच्छन्ति स्म केचन अध्यापकाः । अतः १५० अध्यापकाः तस्य समीपं गत्वा विवरणं पृष्टवन्तः । तेषु केचन पूर्वं तं पाठितवन्तः आसन् । एवं सः छात्रः स्वस्य अध्यापकान् एव बोधितवान् ।

# नागवल्ली

अदृष्टदेवतायाः इष्टतमं पुष्पम् इति ख्यातम् अस्ति नागवल्लीपुष्पम् । श्रीपतिपुष्पम् इत्यपि एतत् पुष्पम् अभिजानन्ति जनाः । विश्वव्यापिनः महाविष्णोः प्रियं श्वेतं चिह्नम् एतस्मिन् वृक्षे द्रष्टुं शक्नुमः । बङ्गालीभाषया 'नागबलि' इति, तमिळुभाषया 'वेळ्ळै इलै' इति, मलयाळभाषया 'पारधोली' इति, मराठीभाषया 'भुट्केशः' इति, हिन्दी-भाषया 'पेदीना' इति च एतत् पुष्पं निर्दिश्यते ।

वृक्षशास्त्रे एतत् 'मुस्पिण्डा फ्राण्डोसा' इति प्रख्यातम् अस्ति । बालकृष्णेन सञ्चारेण पावितायाः मथुरायाः भरतपुरस्य च मध्ये विद्यमाने विशाले वृन्दावनप्रदेशे एते वृक्षाः आधिक्येन दृश्यन्ते । पश्चिमबङ्गालस्य डार्जिलिङ्ग्प्रदेशे पश्चिमखातस्य नील-गिरिप्रदेशे अपि एते वृक्षाः बाहुल्येन दृश्यन्ते ।

एतेषां वृक्षाणाम् औन्नत्यं सामान्यतः षड्मीटर्परिमितं भवति । हरितैः पर्णैः युक्ते अस्मिन् वृक्षे एकं श्वेतं पर्णं भवति । 'तत् पर्णं न, अपि तु पुष्पस्य एव कश्चन भागः' इति केचन वदन्ति । एतस्य पर्णानि परस्परम् अभिमुखं भवन्ति । सामान्यतः पर्णस्य दैर्घ्यं १२ से.मी. परिमितं भवति । पर्णस्य आकारः अण्डाकारः । पर्णस्य उपरितन-भागः गाढहरितः, अधस्तनभागः शुकहरितः च भवति । पुष्पस्य अन्तः नारङ्गवर्णः, बहिः श्वेतमिश्रितरक्तवर्णः च भवति । पुष्पकोषे पञ्च दलानि भवन्ति । तेषु एकं कालान्तरे पर्णताम् आप्नोति । अन्यानि दलानि विगलितानि भवन्ति । एतेषां पर्णानां ग्रथनं कृत्वा उत्सवादिषु तोरणं निर्मीयते । एतस्य पर्णानि अण्डाकारकाणि हरितानि च भवन्ति । तानि यदा पक्वानि भवन्ति तदा कृष्णवर्णताम् आप्नुवन्ति । एतस्य वृक्षस्य सर्वे भागाः औषधगुणयुक्ताः भवन्ति ।



## अस्मत्पूर्वजाः ऋषयः-९

# दूर्वासाः

त्रिपुरासुरसंहारार्थं भगवान् परमेश्वरः एकं बाणं सृष्ट्वा तं सजीवं कृत्वा प्रयुक्तवान् । स च बाणः राक्षससंहारं कृत्वा प्रत्यागत्य शिशुः इव शिवस्य अङ्के उपाविशत् । एतत् दृष्ट्वा सन्तुष्टः शिवः तं बाणं मानवशिशुरूपेण परिवर्तितवान् । सः शिशुः एव प्रवृद्धिं गत्वा 'दूर्वासाः' इति ख्यातिं प्राप्नोत् ।

आदौ संहारार्थं सृष्टः आसीत् इति कारणतः तपस्सम्पत्त्या मुनित्वप्राप्तेः अनन्तरम् अपि तस्य संहारगुणः न निर्गतः, प्रत्युत शीघ्रकोपरूपं प्राप्नोत् । अल्पे अपि विषये सः बहु चिन्तयति स्म । अल्पस्यापि दोषस्य दर्शनात् नितरां व्यग्रः भवति स्म सः । किन्तु किञ्चित्कालानन्तरं वस्तुस्थितिम् अवगत्य शान्तः भवति स्म ।

अस्माकं देशस्य पुराणानां, दूर्वाससः च कश्चन विशिष्टः सम्बन्धः अस्ति । तादृशीषु कथासु अन्यतमां शकुन्तला-दुष्यन्तयोः कथां सर्वे जानन्ति एव । कण्वमुनेः आश्रये वर्धितां शकुन्तलां दुष्यन्तः गान्धर्वविधिना परिणीतवान् । ''भवती यदा कदापि राजधानीम् आगच्छतु । भवतीं स्वीकरिष्यामि'' इति आश्वासनं दत्त्वा राजधानीं प्रतिगतवान् सः ।

कदाचित् दूर्वासाः कण्वमुनेः आश्रमं प्रति आगतवान् । तदा शकुन्तला दुष्यन्तम् एव ध्यायन्ती चिन्तामग्ना आसीत् । अतः सा दूर्वाससः आगमनं न लक्षितवती । तस्मात् 'अपमाननम् अभवत् मम' इति चिन्तितवान् दूर्वासाः । अतः सः कोपेन शकुन्तलां शप्तवान् यत् यं ध्यायन्ती भवती सत्कारार्हम् अतिथिं मां निर्लक्षितवती, सः भवतीं विस्मरतु इति । शकुन्तला, तस्याः सख्यः च- ''अनवधानात् कृतम् अपराधं क्षाम्यतु'' इति यदा प्रार्थितवत्यः तदा शान्तः भूत्वा दूर्वासाः शापं न्यूनीकृतवान् ।

यदा शकुन्तला राजधानीं गतवती, तदा दुष्यन्तः तां यत् न अभिज्ञातवान्, किञ्चित् कालानन्तरं यत् अभिज्ञातवान् च एतयोः उभयोः अपि कारणं दूर्वाससः शापः एव । दूर्वाससः व्यवहारः सामान्यैः सह वा भवतु, महापुरुषैः सह वा भवतु रूक्षः एव आसीत् । यदा कृष्णः द्वारकायाम् आसीत् तदा कदाचित् दूर्वासाः कृष्णं परीक्षितुं तत्र आगतवान् । ''पायसम् आवश्यकम्'' इति उक्तवान् च । तदा रुक्मिणीकृष्णौ स्वयं पायसं सज्जीकृत्य आनीतवन्तौ । तदा दूर्वासाः कृष्णम् उद्दिश्य- ''स्वशरीरं पायसेन लेपयतु भवान्'' इति उक्तवान् । प्रत्युत्तरं किमपि अकथयन् कृष्णः आनन्देन स्वशरीरं पायसेन लेपितवान् । ततः दूर्वासाः रथम् आरुह्य- ''अश्वानां स्थाने तिष्ठन्तौ भवन्तौ रथम् आकर्षेताम्'' इति आज्ञप्तवान् । रुक्मिणी-कृष्णौ तथैव आचरितवन्तौ । एतेन सन्तृप्तस्य दूर्वाससः नेत्राभ्याम् आनन्दाश्रूणि निर्गतानि ।



# भवन्तः जानन्ति वा ?

१. प्रथमः गगनयात्री कः ?
२. मेक्मोहनूरेखा नाम का ?
३. तिमिङ्गिलस्य परिमाणं कियत् ?
४. प्रपञ्चे ज्वलन्तः अग्निपर्वताः कति सन्ति ?
५. भारतीयान्तरिक्ष-परिशोधनसंस्थायाः (ISRO) स्थापनं कदा अभवत् ?
६. काङ्गरू कियत् दूरं कूर्दनं कर्तुं शक्नोति ?
७. पेन्सिलिन्-औषधस्य आविष्कारः केन कदा कृतः ?
८. जन्तर्मन्तर् नाम किम् ? तच्च कुत्र अस्ति ?
९. सूर्यः स्वस्य परिभ्रमणं समापयितुं कियन्तं कालं स्वीकरोति ?
१०. ब्रह्मसमाजस्य स्थापकः कः ?
११. ब्याड्मिण्टन्क्रीडा ऐदम्प्राथम्येन कदा क्रीडिता ?
१२. रवीन्द्रनाथठागोर्वर्याय नोबेल्पारितोषिकं कदा दत्तम् ?
१३. गौतमबुद्धः २५०० वर्षेभ्यः पूर्वं स्वस्य धर्मस्य प्रचारं कस्मिंश्चित् वृन्दावने आरब्धवान् । तत् वृन्दावनं कुत्र अस्ति ?
१४. आकाशवाण्यां विविधभारतीवाणिज्यप्रसारः कदा आरब्धः ?
१५. भारतीया सा संस्था का, यस्यां च अत्यधिकसङ्ख्यया उद्योगिनः सन्ति ?
१६. देहल्यां राजघाट् इत्यत्र महात्मगान्धिवर्यस्य स्मारकम् अस्ति । कस्तूरबावर्यायाः स्मारकं कुत्र अस्ति ?
१७. अन्तिमः मोगल्चक्रवर्ती कः ?
१८. अस्माकं देशस्य प्रथमस्य मूल्याङ्कस्य विमोचनं कदा अभवत् ?
१९. सर्वप्रथमम् 'एशियन्क्रीडाः' कदा कुत्र अभवन् ? तदा सर्वोत्कृष्टपुरस्कारः केन देशेन प्राप्तः ?

## उत्तराणि

१. जान्. हेच्. ग्लेन् ।
२. भारतचीनयोः मध्ये विद्यमाना ऊहिता सीमारेखा ।
३. तिमिङ्गिलः (पुं) महाकारकः । मार्कि ९० द्वादशाङ्गुलपरिमितं दैर्घ्यं भवति तस्य, २०० टन् परिमितः भारः च भवति ।
४. मार्कि ८५० ।
५. १९६९ तमे वर्षे ।
६. ७-९ मीटर् दीर्घम् ।
७. ब्रिटन्देशस्य अलेक्साण्डर् फ्लेमिङ्ग । १९२८ तमे वर्षे ।
८. देहल्यां १७२४ तमे वर्षे अम्बर्वंशस्य जयसिङ्गमहाराजेन निर्मिता अन्तरिक्षपरिशोधनशाला एषा । इदानीं प्रमुखं यात्रास्थलम् एतत् ।
९. भूमध्यरेखायाः समीपे २५ दिनानि । ध्रुवयोः समीपे ३३ दिनानि ।
१०. राजाराममोहनरायः ।
११. १८७० तमे वर्षे । पश्चिमेङ्लेण्ड्प्रदेशे ग्लौजेष्टर्षयर् इत्यत्र स्थिते ब्याड्मिण्टन्ग्रामे ।
१२. १९१३ तमे वर्षे । 'गीताञ्जली'पुस्तकस्य कृते ।
१३. वाराणसीसमीपे स्थिते सारानाथप्रदेशे ।
१४. १९५७ तमे वर्षे अक्टोबर्मासे तृतीयदिनाङ्के ।
१५. 'भारतीयरेल्वे' इत्येतस्यां संस्थायाम् । २० लक्षम् उद्योगिनः ।
१६. पुणेनगरे स्थिते आगाखान्भवनस्य परिसरे । तत्रैव सा दिवङ्गता आसीत् ।
१७. बहद्दूर्षा जाफर् ।
१८. १८५८ तमे वर्षे । तदा मूल्याङ्कः 'षिण्डेडाक्' इति नाम्ना अभिज्ञायते स्म ।
१९. १९५१ तमे वर्षे देहल्याम् । जपान्देशेन ।



# विजयसिंहः

पूर्वं विजयनगरे विजयसिंहनामकः कश्चित् महावीरः आसीत् । 'खड्गयुद्धे तं पराजेतुं कोऽपि न शक्नोति' इति जनाः वदन्ति स्म । तस्मिन् एव नगरे शिवानन्दः नाम कश्चन युवकः आसीत् । 'खड्गयुद्धे प्रावीण्यं सम्पादनीयम्' इति शिवानन्दः बाल्यादारभ्य स्वप्नं पश्यति स्म । यद्यपि सः केषाञ्चन समीपं गत्वा खड्गयुद्ध-सम्बद्धानि तन्त्राणि ज्ञातवान् आसीत्, तथापि कस्यापि पराजयं कर्तुम् असफलः जातः आसीत् ।

अथ कदाचित् कश्चित् योगी शिवानन्दस्य गृहस्य पुरतः वीथीम् आगत्य- "ये मह्यं पूर्णं भोजनं यच्छन्ति, तेषां अपेक्षाः पूरयिष्यामि" इति उक्तवान् ।

ग्रामीणाः सर्वेऽपि योगिनः विषये उपेक्षां प्रदर्शितवन्तः । किन्तु शिवानन्दः बहिः आगत्य - "इतरेषाम् अपेक्षाणां पूरयितुः भवतः पूर्णोदरं भोजनप्राप्तौ कः क्लेशः ?" इति सकुतूहलं पृष्टवान् ।

तदा सः योगी उक्तवान् - "वृक्षः फलानि ददाति । किन्तु बिन्दुमात्रं जलम् आवश्यकं चेत् अपि सः स्वयं प्राप्तुं न शक्नोति । मनुष्यः एव वृक्षस्य आधारः । किन्तु मनुष्यः फलानि स्रष्टुं न शक्नोति । वृक्षः जलम् आनाययितुं न शक्नोति । मनुष्येषु केचन वृक्षाः इव भवन्ति । तादृशेषु अहम् अपि अन्यतमः" इति ।

तदा शिवानन्दः किमपि अकथयन् योगिने पूर्णोदरं भोजनं दत्तवान् । ततः - "खड्गयुद्धे अहम् अद्वितीयः स्याम् । एषा एव मम अपेक्षा" इति स्वस्य अपेक्षां योगिनम् उक्तवान् शिवानन्दः ।

योगी स्वस्यूततः एकं मूलं निष्कास्य शिवानन्दाय दत्त्वा - "एतस्य मूलस्य सम्यक् चर्वणं कृत्वा खादतु । तेन भवान्

नवां शक्तिं प्राप्स्यति । तदा यं भवान् जेष्यति, तस्य महावीरस्य अपेक्षया यः पराक्रमी भवति, तं विहाय अन्यान् सर्वान् भवान् पराजेतुं शक्ष्यति'' इति उक्तवान् ।

'एकवारं विजयसिंहं जयामि चेत् अन्यः कोऽपि मां जेतुं न शक्नोति । अतः कथञ्चित् विजयसिंहः जेतव्यः' इति चिन्तितवान् शिवानन्दः । किन्तु 'एकवारं वा विजयसिंहः कथं जेतव्यः' इति समस्या उद्भूता शिवानन्दस्य ।

योगी शिवानन्दस्य समस्यां प्रश्नद्वारा ज्ञात्वा उक्तवान् - ''भवान् स्वशक्त्या उपायेन वा एकवारं विजयसिंहं पराजयते चेत् सः पुनः भवन्तं जेतुं न शक्नोति । अतः कथञ्चित् विजयसिंहं विचलितं कृत्वा यथा सः पराजयम् अङ्गीकुर्यात् तथा करोतु । किन्तु यदि भवान् विजयसिंहं खड्गयुद्धार्थम् आहूय स्वयं पराजितः भविष्यति, तर्हि मया दत्तस्य मूलस्य प्रभावः न स्थास्यति'' इति ।

''एकवारं विजयसिंहः मया जितः चेत् अपि अन्यान् जेतुं शक्नोमि इति मम न भाति'' इति उक्तवान् शिवानन्दः ।

एतत् श्रुत्वा योगी हसन् - ''औषधं, वरं वा विश्वासम् आधारीकृत्य एव परिणामं जनयति । एकवारं भवान् जयं प्राप्नोति चेत् भविष्यस्य विषये उत्साहः अधिकः भविष्यति । तेन शक्तिः अपि अधिका भविष्यति । मूलस्य प्रभावेण सह एषा शक्तिः अपि यदि कार्यं करिष्यति तर्हि



भवतः प्रतिस्पर्धी एव न भविष्यति'' इति उक्त्वा ततः निर्गतवान् ।

शिवानन्दः योगिना दत्तं मूलं खादितवान् । अनुक्षणं सः नवां शक्तिं प्राप्तवान् । नूतनानि वस्त्राणि धृत्वा खड्गं सज्जीकृत्य विजयसिंहस्य गृहं प्रति प्रस्थितवान् सः ।

मार्गे कश्चित् वृद्धः शिवानन्दं दृष्ट्वा - ''भवतः वेषभूषणादिदर्शनात् ज्ञायते यत् भवान् विजयसिंहं जेतुं प्रस्थितवान् इति । 'तस्य प्रतिस्पर्धी कोऽपि नास्ति' इति भवान् न जानाति वा?'' इति पृष्टवान् ।

तदा शिवानन्दः - ''कथञ्चित् एकवारं विजयसिंहं जयामि चेत् मम प्रतिस्पर्धी कोऽपि न भविष्यति'' इति उक्तवान् ।



शिवानन्दस्य अभिमानपूर्णम् एतत् कथनं श्रुत्वा चकितः वृद्धः प्रवृत्तं सर्वं ज्ञात्वा - "सकृत् वा विजयसिंहस्य पराजयः न सुलभः । खड्गयुद्धे विजयसिंहस्य दौर्बल्यानि कानि इति अहमेव जानामि, न अन्ये । शतं सुवर्णनाणकानि यदि भवान् मह्यं दास्यति, तर्हि सप्ताहाभ्यन्तरे अहं जयतन्त्राणि भवन्तं बोधयिष्यामि । अनन्तरं निश्चयेन भवान् विजयसिंहं जेष्यति" इति उक्तवान् ।

शिवानन्दः - "भवतः वचनानुसारं यदि न भवति, तर्हि....." इति सन्देहं प्रकटितवान् ।

तदा वृद्धः - "तथा यदि भविष्यति, तर्हि अहमेव भवते शतं सुवर्णनाणकानि दास्यामि" इति उक्तवान् ।

एतदनन्तरम् अपि शिवानन्दस्य मनसि वृद्धस्य वचनेषु विश्वासः न उत्पन्नः । शिवानन्दस्य मुखदर्शनात् एव एतत् ज्ञातवान् वृद्धः । अतः सः नियमं लिपिबद्धं कृत्वा दत्तवान् । तदा वृद्धस्य वचने विश्वासं प्राप्य शिवानन्दः वृद्धस्य शिष्यः अभवत् । किन्तु एतस्मिन् विषये विद्यमानं रहस्यांशं शिवानन्दः न जानाति ।

वस्तुस्थितिः तु एषा - एषु दिनेषु विजयसिंहः जयस्य विषये जुगुप्सां प्राप्तवान् आसीत् । 'पराजयः कीदृशः भवति' इति ज्ञातुम् इच्छति स्म सः । वृद्धः तस्य आत्मीयः आसीत् । कदाचित् वृद्धम् उद्दिश्य विजयसिंहः उक्तवान् आसीत् - "पराजयः कीदृशः इति ज्ञातुम् इच्छामि अहम् । किन्तु योग्यवीरः एव मां पराजयेत् इति मम अपेक्षा । यतः तेन मम गौरवम् अपि अधिकं भवति । तादृशस्य चयनं भवान् एव करोतु" इति । तदर्थं सः वृद्धः प्रयतमानः आसीत् ।

एकस्य सप्ताहस्य अनन्तरं शिवानन्दः विजयसिंहं स्पर्धार्थम् आहूतवान् । स्पर्धां द्रष्टुं बहवः सम्मिलिताः आसन् । युद्धे शिवानन्दस्य एव जयः अभवत् । खड्गयुद्धे शिवानन्दस्य प्रावीण्यं दृष्ट्वा विजयसिंहः सन्तुष्टः ।

विजयसिंहस्य पराजयः भवेत् इति केनापि न ऊहितम् आसीत् । विजयनगरस्य प्रजाः सर्वाः तस्मिन् विषये विचित्रं तर्कम्

आरब्धवत्यः । एकस्मिन् दिने एव शिवानन्दः महापुरुषः संवृत्तः ।

स्ववचनानुसारं शिवानन्दः वृद्धाय शतं सुवर्णनाणकानि दत्तवान् । शिवानन्दं सर्वे अपि महावीरं मन्यन्ते स्म ।

पूर्वं ये वीराः विजयसिंहेन पराजिताः आसन्, तेषु केचन एतां वार्तां श्रुत्वा विजयनगरम् आगतवन्तः । ते सर्वे अपि पूर्वं शिवानन्दं पराजितवन्तः आसन् । खड्गविद्यायां शिवानन्दस्य सामर्थ्यं ते जानन्ति स्म इति कारणतः ते चिन्तितवन्तः यत् प्रायशः विजयसिंहस्य शक्तेः ह्रासः जातः अस्ति इति ।

जीवने एकवारं वा विजयसिंहः पराजेतव्यः इति तेषां महावीराणां महती इच्छा आसीत् । अतः ते विजयसिंहं खड्गयुद्धार्थम् आहूतवन्तः । किन्तु तेषाम् आह्वानं निराकुर्वन् विजयसिंहः उक्तवान् - ''एतेन पराजयेन अहं खिन्नः अस्मि । अतः केनापि सह स्पर्धां न इच्छामि । यदि भवन्तः इच्छन्ति तर्हि तेन शिवानन्देन सह एव स्पर्धन्ताम्'' इति ।

ते महावीराः शिवानन्दं स्पर्धार्थम् आहूय पराजयं प्राप्तवन्तः । 'शिवानन्दः इदानीं पूर्ववत् नास्ति' इति ज्ञात्वा ते सर्वे अपि महावीराः - ''भोः, महावीराधिवीर, विजयसिंहस्य अपेक्षया पराक्रमी भवान् । अतः खड्गयुद्धे भवादृशः अन्यः नास्ति'' इति तं श्लाघितवन्तः ।

एतत् सर्वं श्रुत्वा शिवानन्दः नितरां



सन्तुष्टः । सः चिन्तितवान् - 'विजयसिंहस्य शक्तिः ह्रासं गता अस्ति । एकस्य पराजयस्य कारणात् एव एषा शक्तिहीनता सञ्जाता । अतः एव सः अन्यैः वीरैः सह स्पर्धितुं भीतिम् अनुभवति । एतत् मम कीर्तेः हानिं जनयेत् अपि । जनाः कदाचित् चिन्तयेयुः यत् शक्तिहीनेन विजयसिंहेन सह युद्धं कृत्वा शिवानन्दः विजयं प्राप्तवान् इति । अतः एतस्य आक्षेपस्य सम्भावना इदानीम् एव मया निवारणीया । यदि विजयसिंहः अन्यान् महावीरान् पराजयेत तर्हि एव तं पराजितवतः मम गौरवं वर्धते । अतः विजयसिंहः अन्यान् वीरान् जेतुं मतिं यथा कुर्यात् तथा कर्तुं मया वृद्धस्य साहाय्यं स्वीकरणीयम्' इति । अतः सः

वृद्धसमीपं गत्वा एतद्विषये साहाय्यं प्रार्थितवान् ।

सर्वं श्रुत्वा वृद्धः हसन् उक्तवान् - "विजयसिंहः तैः सह योद्धुं न इच्छति । किन्तु सः तान् सर्वान् जितवता भवता सह युद्धं कुर्यात्" इति ।

तदा शिवानन्दः - "मया तु पूर्वमेव सः जितः खलु ?" इति सगर्वम् उक्तवान् ।

"पराजयस्य अनुभवः भवतु इति उद्देशपूर्वकं पराजयं प्राप्तवान् आसीत् विजयसिंहः । वस्तुतस्तु तं पराजेतुं भवान् न शक्नोति" इति उक्तवान् वृद्धः ।

"विजयकारणतः मया उत्साहः प्राप्तः अस्ति । किन्तु पराजयेन प्राप्तः निरुत्साहः अस्ति विजयसिंहस्य मनसि । अतः अस्मिन् सन्दर्भे अपि मम एव जयः" इति उक्तवान् शिवानन्दः ।

तदा वृद्धः - "प्रायशः इतोऽपि भवान् न ज्ञातवान् इति मन्ये । भवता खादितात् अपि बलवत्तरं मूलं खादितवान् अस्ति विजयसिंहः । इतःपरं तं जेतुं कोऽपि न शक्नोति" इति मन्दहासं प्रकटयन् उक्तवान् ।

वृद्धस्य उत्तरं श्रुत्वा आश्चर्यचकितः शिवानन्दः - "सः योगी विजयसिंहाय अपि मूलं दत्तवान् अस्ति वा ?" इति पृष्टवान् ।

वृद्धः रहस्यं कथयन् इव मन्दस्वरेण - "भवान् एव विजयसिंहाय मूलं दत्तवान् अस्ति । समर्थः महावीरः पराजयम् अनुभूय क्षतग्रस्तः व्याघ्रः इव अधिकां शक्तिं प्राप्नोति । पराजयस्य अपमाननं कीदृशं भवति इति ज्ञातवता विजयसिंहेन इतःपरं कदापि पराजयस्य अपेक्षा न क्रियते" इति उक्तवान् ।

तथापि विजयोत्साहेन युक्तः शिवानन्दः विजयसिंहं पुनश्च खड्गयुद्धार्थम् आहूतवान् । किन्तु युद्धे पराजयः अङ्गीकरणीयः अभवत् तेन ।

ततः शिवानन्दः स्वशक्तेः मितिम् अवगत्य तदनुगुणम् एव स्पर्धायां भागं वहति स्म ।





# न्यायनिर्णयः

पूर्वं जयवर्मा नाम कश्चित् महाराजः आसीत् । सः काशीराज्यं पालयति स्म । श्रीनगरं काशीराज्यस्य राजधानी आसीत् । श्रीनगरस्य समीपे एव कश्चित् न्यायाधीशः निवसति स्म । सः न्यायदाने नितरां निपुणः आसीत् । तस्य एतत् वैशिष्ट्यं महाराजः जयवर्मा अपि ज्ञातवान् । सः कदचित् निर्णीतवान् यत् न्यायाधीशस्य न्यायनिर्णयक्रमः मया प्रत्यक्षं द्रष्टव्यः इति ।

एवं निश्चित्य राजा कदाचित् सामान्यजनवेषं धृत्वा अश्वम् आरुह्य न्यायाधीशस्य नगरं प्रति प्रस्थितः ।

यदा सः नगरं प्रविशन् आसीत् तदा मार्गपार्श्वस्थः कश्चित् भिक्षुकः - 'कृपया साहाय्यं करोतु' इति वदन् महाराजस्य समीपम् आगतवान् । भिक्षुकाय किञ्चित् धनं दत्त्वा महाराजः प्रस्थातुम् उद्युक्तः । किन्तु सः भिक्षुकः - 'पुनः साहाय्यं करोतु' इति दैन्येन प्रार्थितवान् ।

तदा महाराजः - ''साहाय्यं कृतं खलु? इतोऽपि किं भवतः?'' इति पृष्टवान् ।

तदा सः भिक्षुकः - ''अहं विपणिसमीपं गन्तुम् इच्छामि । भवान् जानाति एव यत् अहं पङ्गुः अस्मि इति । अतः भवान् यदि मां विपणिपर्यन्तं नयेत्, तर्हि महान् उपकारः कृतः भवेत्'' इति ।

''अस्तु, उपविशतु तर्हि'' इत्युक्त्वा महाराजः अश्वस्य उपरि भिक्षुकं स्वस्य पृष्ठतः उपवेश्य विपणिं प्रति प्रस्थितवान् ।

यदा विपणिः प्राप्ता तदा महाराजः भिक्षुकम् उद्दिश्य उक्तवान् - ''भवान् अवतीर्य गन्तुं शक्नोति'' इति ।

किन्तु भिक्षुकः - ''भवान् एव प्रथमम् अवतरतु'' इति महाराजम् उक्तवान् ।

'प्रायः एषः पङ्गुः इति कारणतः

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''



अवतरणे क्लेशः स्यात् । तदर्थं मया एव प्रथमम् अवतीर्य साहाय्यं करणीयमिति मन्ये' इति चिन्तयन् महाराजः अश्वात् अवतीर्य 'जागरूकतया अवतरतु' इति वदन् तस्य हस्तं गृहीतवान् ।

अनुक्षणं भिक्षुकः - ''मार्गे भवान् पादाभ्याम् आगच्छन् आसीत् इत्यतः भवतः साहाय्यं कृतं मया । तस्य प्रतिफलरूपेण माम् एव अवतरतु इति वदति किल भवान् ! ' इति उक्तवान् ।

महाराजस्य महत् आश्चर्यं जातम् । ''मम अश्वस्य उपरि उपविश्य एतावत्-पर्यन्तम् आगत्य इदानीं 'मम अश्वः एषः' इति वदति वा भवान्? शीघ्रम् अवतरतु रे'' इति कठोरस्वरेण उक्तवान् महाराजः ।

''एषः अश्वः मम । अवतरणस्य प्रश्नः एव नास्ति'' इति उक्तवान् भिक्षुकः ।

''कीदृशम् अन्याय्यम् एतत् ! अहम् एतावत्पर्यन्तम् एतादृशम् अन्याय्यम् अन्यत्र कुत्रापि न दृष्टवान् । अस्मिन् नगरे एव निपुणः न्यायाधीशः अस्ति इति भवान् जानाति वा?'' इति पृष्टवान् महाराजः ।

''न्यायाधीशः कीदृशः वा भवतु । किन्तु सः मत्परतया एव निर्णयं श्रावयति इति मम आत्मविश्वासः अस्ति'' इति उक्तवान् भिक्षुकः ।

''तर्हि तस्य समीपं गच्छाव तावत्'' इति उक्तवान् महाराजः । अनन्तरम् उभौ अपि न्यायाधिकारिसमीपं गतवन्तौ ।

एतयोः आगमनात् पूर्वम् एव अन्ये केचन न्यायं प्राप्तुं तत्र आगताः आसन् । कश्चन धनिकः कृषिकः च कस्याश्चित् स्त्रियाः विषये न्यायं प्राप्तुम् आगतौ आस्ताम् । धनिकः कृषिकः चापि प्रतिपादयतः स्म यत् एषा स्त्री मम पत्नी इति । उभयोः अपि वादं श्रुत्वा - ''एतां स्त्रियम् अत्रैव त्यक्त्वा गच्छताम् । श्वः मम निर्णयं वदिष्यामि'' इति उक्त्वा तौ प्रेषितवान् न्यायाधीशः ।

अनन्तरं कश्चित् घातुकः कश्चित् तैलवणिक् च आगतवन्तौ । घातुकस्य हस्ते नाणकानि आसन् । तैलवणिजः हस्ते तैलम् आसीत् ।

''स्वामिन् ! एषः दुष्टः मम समीपम् आगत्य उक्तवान् यत् शतरूप्यकाणां

परीवर्तं भवान् ददाति चेत् अहं तैलं स्वीकरोमि इति । अहं यदा मम समीपे विद्यमानं धनं गणयन् आसं, तदा एषः बलात्कारेण सर्वं स्वीकृत्य - 'इदानीं सर्वं मम' इति वदन् अस्ति । अतः कृपया न्यायं ददातु'' इति उक्तवान् तैलवणिक् ।

''महाशय ! अहं तैलक्रयणार्थम् एतस्य आपणं गतवान् इति तु सत्यमेव । यदा अहम् एतस्य आपणे धनं दातुं धनं गणयन् आसं, तदा एषः मम हस्तं गृहीत्वा 'एतत् धनं मम एव' इति उक्तवान् । अतः ज्येष्ठः श्रेष्ठः भवान् एव अस्मिन् विषये निर्णयं वदतु इति प्रार्थये'' इति उक्तवान् घातुकः ।

एतत् सर्वं श्रुत्वा - ''तत् धनं मम समीपे स्थापयित्वा गच्छताम् । मम निर्णयं श्वः वदिष्यामि'' इति उक्तवान् न्यायाधीशः ।

अन्ते महाराज-भिक्षुकयोः पर्यायः आगतः ।

''महात्मन् ! श्रीनगरीयः अहं कतिचन वस्तूनि क्रेतुम् एतत् नगरं प्रविष्टवान् आसम् । किन्तु नगरस्य महाद्वारे एषः पङ्गुः मां भिक्षां याचितवान् । मया धनम् अपि दत्तम् । अनन्तरम् एषः भिक्षुकः - 'अहं पङ्गुः अस्मि । कृपया विपणिपर्यन्तं मां नयतु'' इति प्रार्थितवान् । अहं मम अश्वस्य उपरि एतम् उपवेश्य विमणिसमीपम् आगत्य 'अवतरतु' इति यदा उक्तवान्, धार्ष्ट्येन एषः उक्तवान् यत् एषः मम एव अश्वः इति'' इति उक्तवान् महाराजः ।

''स्वामिन्, भवान् दर्शनेन एव ज्ञातुं



शक्नोति यत् अहं पङ्गुः इति । अतः पादाभ्यां मम अटनं कष्टकरम् एव । तदर्थम् एव अहं सर्वदा एतस्य अश्वस्य उपरि उपविश्य एव गच्छामि । कृपया विपणिपर्यन्तं मां नयतु' इति दीनतया एषः मार्गे मां प्रार्थितवान् । अतः अहम् एतं विपणिं प्रापितवान् । इदानीं तु एषः दुष्टः वदति यत् एषः अश्वः मम एव इति । कथं सङ्गच्छते एतत्? कृपया न्यायदानं करोतु भवान्'' इति उक्तवान् पङ्गुः ।

तदा न्यायाधीशः - ''एतम् अश्वम् अत्रैव त्यक्त्वा गच्छतां भवन्तौ । मम निर्णयं श्वः वदिष्यमि'' इति उक्त्वा तौ प्रेषितवान् ।

ये ये न्यायं प्रार्थितवन्तः आसन् ते सर्वे



अनन्तरदिने समये उपस्थिताः अभवन् । न्यायाधीशः प्रथमं धनिकम् उद्दिश्य - ''एषा भवतः एव पत्नी । भवान् एतां नेतुम् अर्हति । एषः कृषिकः असत्यम् उक्तवान् इति कारणतः एषः पञ्चाशत्-कशाताडनैः दण्ड्यते'' इति उक्तवान् ।

अनन्तरं सः घातुकम् आहूय - ''एतत् धनं भवान् स्वीकरोतु । एतत् सर्व भवतः एव'' इति सूचितवान् । 'एषः तैलवणिक् असत्यम् उक्तवान् इति कारणतः एषः अपि पञ्चाशत् कशाताडनैः दण्ड्यते' इति उद्घोषितवान् ।

अन्ते न्यायाधीशः महाराजं भिक्षुकं च आहूय - ''अहं भवतोः अश्वं विंशत्या अश्वैः सह बद्धवान् अस्मि । भवन्तौ स्वस्य अश्वम् अन्वेष्टुं शक्नुतः वा?'' इति पृष्टवान् ।

उभौ अपि उक्तवन्तौ - ''अन्वेष्टुं शक्नुवः'' इति ।

''भवान् प्रथमम् आगच्छतु'' इति महाराजम् उक्त्वा तम् अश्वशालां नीतवान् न्यायाधीशः । अश्वशालायां विंशत्या अश्वैः सह स्थितं स्वस्य अश्वं बहु सुलभतया दर्शितवान् महाराजः ।

''भवान् न्यायस्थानं गत्वा भिक्षुकम् अश्वशालां प्रति प्रेषयतु'' इति महाराजं सूचितवान् न्यायाधीशः । अनन्तरं भिक्षुकः अपि आगत्य 'एषः एव मम अश्वः' इति न्यायाधिकारिणे दर्शितवान् ।

न्यायाधिकारी न्यायस्थानं प्रति आगत्य महाराजम् उद्दिश्य - ''एषः भवतः एव अश्वः । अतः एतं नेतुम् अर्हति भवान्'' इति सूचितवान् । भिक्षुकः असत्यम् उक्तवान् इति कारणतः तं पञ्चाशत्-कशाताडनैः दण्डितवान् अपि ।

तस्य दिनस्य न्यायालयस्य व्यवहारः समाप्तः आसीत् । सर्वे ततः प्रस्थिताः । किन्तु महाराजः तत्रैव स्थितः आसीत् । तं दृष्ट्वा न्यायाधिकारी पृष्टवान् - ''किमर्थं भवान् अत्रैव स्थितवान् अस्ति? मया न्यायनिर्णयविषये किं कोऽपि दोषः आचरितः?'' इति ।

''भवतः न्यायदानविषये मम महान् सन्तोषः अस्ति एव । तस्मिन् विषये सम्भाषणं कर्तुम् एव अहम् अत्र स्थितवान्

अस्मि । एवं न्यायनिर्णयः भवता कथं कृतः इति किञ्चित् विवृणोतु इति प्रार्थये'' इति उक्तवान् महाराजः ।

''सत्यम्, न्यायदानं तावत् सुलभं न । प्रथमं तस्याः स्त्रियाः विषयम् एव चिन्तयाम । ह्यः अहं तां मम गृहं नीत्वा सूचितवान् यत् पुष्पैः करण्डकम् अलङ्करोतु इति । सा तत् कार्यं सकौशलं लीलया कृतवती । कृषिकस्य पत्नी एतत् कार्यं कर्तुं न शक्नोति । अतः एषा धनिकस्य पत्नी एव इति निर्णयं कृतवान् अहम्'' इति उक्तवान् न्यायाधिकारी ।

''अस्तु नाम, घातुकस्य विषये कथं निर्णयः कृतः भवता?'' इति पृष्टवान् महाराजः ।

''तैलवणिजः हस्ते यदि धनं स्यात् तर्हि धनस्य उपरि तैलस्य लेपनं भवेत् एव । तदर्थम् अहम् अनुक्षणं धनं जले स्थापितवान् । किन्तु एकः तैलबिन्दुः अपि जलस्य उपरि न दृष्टः । अतः तत् धनं घातुकस्य एव इति अहं निर्णीतवान्'' इति उक्तवान् न्यायाधिकारी ।

''आवयोः विषये कथं निर्णयः कृतः भवता? किं पङ्गुः अश्वम् अभिज्ञातुं न शक्तवान् ?'' इति पृष्टवान् महाराजः ।

''भवन्तौ उभौ अपि अश्वम् अभिज्ञातुं शक्तौ भवतः इति पूर्वमेव जानामि स्म अहम्'' इति उक्तवान् न्यायाधिकारी ।

''तर्हि सः अश्वः मम एव इति कथं निर्णीतवान् भवान् ?'' इति आश्चर्येण पृष्टवान् महाराजः ।

''भवन्तौ अश्वम् अभिज्ञातुं शक्नुतः वा न वा इति मया न परीक्षितम् एव । प्रत्युत अश्वः भवतोः कतरम् अभिजानाति इति अहं परिशीलितवान् । गमनस्य अनुक्षणम् एव भवन्तम् अभिज्ञातवान् अश्वः । अतः 'अश्वः भवतः एव' इति अहं निर्णीतवान्'' इति उक्तवान् न्यायाधिकारी ।

न्यायाधिकारिणः चतुरतां दृष्ट्वा जयवर्मणः महान् सन्तोषः जातः । सः श्रीनगरं गत्वा न्यायाधिकारिणम् आहूय धनकनकादिकं दत्त्वा सम्मानितवान् ।



# चित्रशीर्षिका - स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां मार्च् - १९९६ मासे प्रकटयिष्यामः ।



S.G. Shesagiri



S.G. Shesagiri

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'नवम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **जीवरहिते पत्थलिके, भारवहनात् को लाभः ?**

द्वितीयचित्रम् - **जीवरहितगजस्य आरोहणात् रे बालौ, का सिद्धिः ?**

प्रेषिका - प. गोरीजयलक्ष्मीः, १३-४-४(३) पद्मसालालवीथी, बेतनीपेटमार्गः, भीमवरम् - ५३४ २०१


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ६०-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्,** चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

कभी न हम भूलें जी... जीते जी

PARLE

जीने की राह यही है सही

जीवन की इन राहों में हर कदम है इम्तिहान. किन राहों को अपनाएंगे, किन से मुंह मोड़ेंगे, यही हमारी पहचान. बिना चाह के, बिना आस के, किसी का हाथ बंटाना, यूं ही राह चलते, किसी के काम आना. इसी को कहते सच्चाई से जीना. कभी न हम भूलें जी . . . जीते-जी, जीने की राह यही है सही.




बरसों से भारत के सबसे ज्यादा चाहे जानेवाले बिस्किट.

• स्वाद भरे, सच्ची शक्ति भरे •

